# श्रीपद्ममहापुराणम्

# THE PADMAMAHĀPURĀṆAM

## सृष्टि खण्ड SṚṢṬI KHAṆḌA

खेमराज श्री कृष्णदासेन सम्पादितस्य मुम्बई श्री वेङ्कटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीपद्ममहापुराणम्

# THE PADMAMAHĀPURĀṆAM

प्रथम भाग : [सृष्टि खण्ड]

देहलीस्थेन प्रो० डा० चारुदेवशास्त्रिणा प्रणीतया भूमिकया सनाथितम्
नागशरणसिंहसम्पादितश्लोकानुक्रमण्या च संहितम्




**NAG PUBLISHERS**

*11-A/U.A. (POST OFFICE BUILDING) JAWAHARNAGAR, DELHI-*

ओं नमः परमात्मने ।

नमः सहशिष्याय भगवते कृष्णद्वैपायनाय व्यासाय ।

मत्कृतां भूमिकां दृष्ट्वा नारदीये विवेचिकाम् ।
प्रासदन्सूरयो भूरि मां च तेनोदहर्षयन् ॥ १ ॥

पार्श्वेऽपि तां तथाभूतां प्रणिनीषामि यत्नतः ।
आत्मनः परितोषाय विनोदाय विदामपि ॥ २ ॥

अष्टाशीतिसमश्चाहं कृशोऽपि पलिती जरी ।
कृत्ये कष्टे प्रवृत्तो यत् तत्र हेतुरनुग्रहः ॥ ३ ॥

कारुण्याब्धेः परेशस्य गुरूणामाशिषोऽपि वा ।
अन्यथा निःसहायस्य कथं मे स्यादुपक्रमः ॥ ४ ॥ (युग्मम्)

दैवीं वाचमुपासीय कुर्वीय च क्रियाः[1] शुभाः ।
सन्ततं, मे वरं देयाद् वरेशः परमेश्वरः ॥ ५ ॥

---

१. क्रियाः शास्त्रार्थनिबन्धनीः कृतीः ।

# भूमिका

## पुराणमहिमा

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् (१।१।४५)। बहुशास्त्रं समभ्यस्य बहुवेदान् सविस्तरान्। पुंसोऽश्रुतपुराणस्य सम्यग्याति न दर्शनम् (५।१०६।१३)॥ पिशाचाः प्रायशो नाम ब्रह्मराक्षसनामकाः। वेद-मन्त्रस्य वेत्तारो दृश्यन्ते न पुराणवित् (५।११५।४५)॥ पुराणविमुखो नैव सर्वः सर्वं हि पश्यति (४६)॥

## पुराणश्रवणस्य फलम्

पुराणं शृणुयान्नित्यं महापापदवानलम् (३।६१।५६)। पुराणं सर्व-तीर्थेषु तीर्थं चाधिकमुच्यते। यस्य पादैकश्रवणाद्धरिरेव प्रसीदति (६०)॥ यथा सूर्यवपुर्भूत्वा प्रकाशाय चरेद्धरिः। सर्वेषां जगतामेव हरिरालोकहेतवे (६१)॥ तथैवान्त.प्रकाशाय पुराणावयवो हरिः। विचरेदिह भूतेषु पुराणं पावनं परम् (६२)॥ तस्माद्यदि हरेः प्रीतेरुत्पादे धीयते मतिः। श्रोतव्य-मनिशं पुंभिः पुराणं कृष्णरूपिणः (६३)॥

## पाद्मम् इति समाख्यायां हेतुः

एतदेव महापद्ममद्भुतं यन्मयं जगत्। तद्वृत्तान्ताश्रयं तस्मात्पाद्म-मित्युच्यते बुधैः (३।१।२६)॥

## पाद्मस्य पुराणस्य परिमाणम्

सृष्टिखण्ड इदं परिमाणमुक्तम्—सहस्रं पञ्चपञ्चाशत् पञ्च-खण्डैः समन्वितम्। तत्रादौ सृष्टिखण्डं भूमिखण्डं ततः परम्। स्वर्गखण्डं ततः पश्चात्ततः पातालखण्डकम्। पञ्चमं ततः ख्यातमुत्तरं खण्डमुत्तमम् (१।१।५४-५५)॥ स्वर्गखण्डे (३।१।२३) तु सप्त खण्डान्युक्तानि। तत्र ब्रह्मखण्डं क्रियासारखण्डं चेति द्वयमतिरिक्तम् इति विसंवादः। श्लोक-संख्यायां तूभयत्र संवादः। पर्वशोऽप्यस्य विभागो लक्ष्यते—पञ्चभिः पर्वभिः प्रोक्तं संक्षेपाद्व्यासकारितात्। पौष्करं प्रथमं पर्व यत्रोत्पन्नः स्वयं विराट् (१।१।५६)॥ द्वितीयं तीर्थपर्व स्यात्सर्वग्रहगणाश्रयम्। तृतीयपर्वग्रहणा राजानो भूरिदक्षिणाः (६०)॥ वंशानुचरितं चैव चतुर्थं परिकीर्तितम्।

पञ्चमे मोक्षतत्त्वं च सर्वतत्त्वं निगद्यते (६१) ।।

### समुद्रमन्थने बीजम्

समुद्रमन्थनं नाम सृष्टिखण्डे (१।४।६-३३) इत्यत्राख्यायते । तत्सार इहोपाख्यायते—आत्रेयो रोषण ऋषि दुर्वासा विद्याधरीहस्ते सुगन्धाढ्यां मालां दृष्ट्वा साभिलाषस्तामाह—इमां मे देहि, जटाजूटे करिष्यामीति । सा च प्रमनास्तस्मै तां प्रदिदेश । स च शिरसि तां बद्ध्वोन्मत्तप्रेतवद् रराज, आत्मानं चोवाद—नाहं कामविचक्षणः, क्षुभ्यति च मे मनः, तेन स्वं सौभाग्यं प्रदर्शयन्नन्यत्र यामि । अथ मेदिनीं परिभ्रमन् स दिवौकसां पति महेन्द्रमैरावतमारूढं व्रजन्तमद्राक्षीत्, भ्रमदुन्मत्तषट्पदां तां मालामुन्मत्तवत्तस्मिंश्चिक्षेप । स चेन्द्रस्तामादाय गजमूर्धनि प्रास, वारणश्च गन्धाघ्राणेन मदान्धस्तामिमां पृथ्वीतले निचिक्षेप । तद् दृष्ट्वा महतीयं मेऽवमानना देवराजेनैश्वर्यमदमत्तेन कृतेति मत्वा भृशं चुकोप शशाप च—मूढ, यतो दृप्तस्त्वं मामेवमवहेलयसि ततस्त्रैलोक्यं नष्टलक्ष्मीकं भविष्यतीति । इन्द्रश्च शापभीतो गजस्कन्धादवरुह्यामर्षणं तं मुनिमनुनेतुं येते, परं प्रकृतिवक्रोऽसौ कस्यानुनयं ग्रहीष्यति । ततो मुनिः स्वमध्वानं प्रतस्थे, महेन्द्रश्चाप्यमरावतीम् । ततो निःश्रीकं सशक्रं त्रिभुवनं जज्ञे । न केचिद् दानानि ददुः, न केचिदीजिरे, न केचित्तपांसि तेपिरे । सुराश्चासुरैर्विजिग्यिरे । एवं दुःसंस्थिता विषममापन्नाः सुराः समेत्य पितामहं शरणमुपेत्य सर्वं वृत्तं यथावदाचचक्षिरे, पितामहश्च सुरैः सङ्गत्य क्षीरार्णवे शयानं भगवन्तं पुण्डरीकाक्षं पुरुषोत्तममुपसद्योदाजहार—उत्तिष्ठ विष्णो, शीघ्रं देवानां हितं कुर्विति । सपदि प्रबुद्धः करुणावरुणालयः कमलापतिः स्माह—मा भैष्ट, भवतां करिष्यामि तेजस आप्यायनम् । यद् ब्रवीमि तदनुष्ठीयताम् । दैत्यैः सम्भूय सर्वा ओषधीः समाहृत्य मन्दरं मन्थानं कृत्वा वासुकिं च नेत्रम्, मथ्यतां क्षीरोदधिः, ततः समुद्भूतेनामृतेन पीतेन बलिनो यूयं भविष्यथेति ।।

### दक्षयज्ञे रुद्रस्यानिमन्त्रणे हेतुः

शृणु वत्से यथातथम् (१।५।३५) । येनाद्य कारणेनेह पतिस्ते न निमन्त्रितः । कपालपात्रधृक् चर्मी भस्मावृततनुस्तथा (३६) ।। शूली मुण्डी च नग्नश्च श्मशाने रमते सदा । विभूत्याङ्गानि सर्वाणि परिमार्ष्टि च नित्यशः (३७) ।। व्याघ्रचर्मपरीधानो हस्तिचर्म-परिच्छदः । कपालमाला शिरसि खट्वाङ्गं च करे स्थितम् (३८) ।। कट्यां वै गोनसं बद्ध्वा लिङ्गेऽस्थ्नां वलयं तथा । पन्नगानां तु राजानमुपवीत च वासुकिम् (३९) ।। भ्रमति चानेन सततं क्षितौ (४०) ।। त्रिनेत्रश्च त्रिशूली च गीतनृत्यरतः सदा । कुत्सितानि तथान्यानि सदा ते कुरुते पतिः (४१) । त्रपाकरो भवेन्मह्यं देवानां सन्निधिः कथम् । कीदृक् च वसनं तस्य केतनं प्रतिनार्हति (४२) ।।

### रुद्रेण ब्रह्मणः शिरसः कर्तनम्

ब्रह्मणः पञ्चमं वक्त्रमूर्ध्वमासीन्महात्मनः। ततो ब्रह्माऽभवन्मूढो रजसा चोपबृंहितः। ततोऽयं तेजसा सृष्टममन्यत मया कृताम् (१।१४।९०-९१)॥ मत्तोऽन्यो नास्ति वै देवो येन सृष्टिः प्रवर्तिता। सहदेवा सगन्धर्वा पशुपक्षिसमाकुला (९२)॥ एवं मूढः स पञ्चास्यो विरिञ्चिरभवत् पुनः। साङ्गोपाङ्गेतिहासांश्च सरहस्यान् ससङ्ग्रहान्। वेदानधीते वक्त्रेण पञ्चमेनोर्ध्वचक्षुषा (९५)॥ तस्यासुरसुराः सर्वे वक्त्रस्याद्भुतवर्चसः। तेजसा न च प्रकाशन्ते दीपाः सूर्योदये यथा (९६)॥ स्वपुरेष्वपि सोद्वेगा ह्यवर्तन्त विचेतसः। न कश्चिद् गणयेच्चान्यं तेजसा क्षिपते परान् (९७)॥ नाभिगन्तुं न च द्रष्टुं पुरस्तान्नोपसर्पितुम्। शेकुश्च तत्र संत्रस्ताः पद्मयोनिं महाप्रभुम् (९९)॥ गच्छामः शरणं शम्भुं निस्तेजसोऽस्य तेजसा (१००)॥ (उपेत्य च तमित्थं प्रार्थयामासुः) यदस्माकं महद् वार्यं तेज ओजः पराक्रमः। तत्सर्वं ब्रह्मणा ग्रस्तं पञ्चमास्यस्य तेजसा (१०४)॥ जायते तु यथापूर्वं तथा कुरु महेश्वर (१०५)॥ इत्थं विनीतवत्प्रार्थितः शन्तातिः शिवस्तत्र जगाम यत्राहङ्कारविमूढात्मा विरिञ्चिरास, मोहेन परवांश्च भूतेशं भवं नाभिजज्ञौ। इत्थं लब्धावसरस्त्रिपुरारिस्तस्यातितेजस्वि वक्त्रमभिलक्ष्याट्टहासं हसित्वा वामाङ्गुष्ठनखाग्रेण कदलीगर्भमिव करुहैस्तच्छिरश्चकर्त॥

### ब्रह्महत्याफलम्

ब्रह्मशिरश्छेदेन शिवो ब्रह्महा बभूव। ब्रह्महत्यादूषितं तं वर्णयन्नाह-ब्रह्महत्याभिभूतोऽसौ भ्रमंस्त्राणं न विन्दति (१।१४।१६५) त्रपान्वितः कपालं तु पश्यन्हस्तगतं सदा। करौ विधुन्वन्बहुशो विक्षिप्तश्च मुहुर्मुहुः (१६६)॥ यदाऽस्य धुन्वतो हस्तौ कपालं पतते न तु। तदास्य बुद्धिरुत्पन्ना (निष्कृतिं करवाणि वै) (१६७)॥

### को नाम ब्राह्मणः

येन पूर्णमिवाकाशं भवत्येकेन सर्वदा। शून्यं येन समाकीर्णं तं देवा ब्राह्मणं विदुः (१।१५।३६७)॥ येन केन चिदाच्छन्नो येन केन चिदाशितः। यत्र-क्वचन-शायी च तं देवा ब्राह्मणं विदुः (३६८)॥ अहेरिव जनाद्भीतः सुहृदो नरकादिव। कृपणादिव नारीभ्यस्तं देवा ब्राह्मणं विदुः (३६९)॥ विमुक्तः सर्वसङ्गेभ्यो मुनिराकाशवत् स्थितः। विष्णुप्रियकरः शान्तस्तं देवा ब्राह्मणं विदुः (३७८)॥ निवारितसमारम्भं निर्नमस्कारमस्तुतिम्। अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः (३८०)॥ इह सामान्यो ब्राह्मणो न लिलक्षयिषितः किन्तर्हि मोक्षाश्रमं समाश्रितो ब्राह्मणो यतिः। ब्राह्मण एव चतुर्थ आश्रमेऽधिक्रियत इति ब्राह्मणस्य यतेश्चाभेदमभिमत्येयं लक्षणोक्तिरिति वेद्यम्।

### गोपकन्या सौन्दर्यम्

इह सृष्टिखण्डे षोडशेऽध्याये यदाभीर्याः सौन्दर्यमुपवर्णितं तद-नुत्तमं काव्यमिति रसिकजनास्वादाय समस्य विन्यस्यते—नीलाभ्रकनका-म्भोजविद्रुमाभां सदर्शताम् (?)। त्विषं बिभ्रतीमङ्गैः केशगण्डेक्षणा-धरैः। मन्मथाशोकवृक्षस्य प्रोद्भिन्नां कलिकामिव (१३७)॥ (इन्द्रो ददर्श-त्यनुषङ्गः)। (इदं च चिन्तयामास—) प्रदग्धहृच्छयेनैव नेत्रवह्निशिखो-त्करैः। धात्रा कथं हि सा सृष्टा प्रतिरूपमपश्यता (१३८)॥ कल्पिता चेत् स्वयं बुद्ध्या नैपुण्यस्य गतिः परा। उत्तुङ्गाग्राविमौ सृष्टौ यद्धि मे पश्यतः सुखम् (१३९)॥ पयोधरौ नातिचित्रं कस्य संजायते हृदि। रागोपहतदेहो ऽयमधरो यद्यपि स्फुटम् (१४०)॥ तथापि सेवमानस्य निर्वाणं सम्प्रयच्छति। वहद्भिरपि कौटिल्यमलकैः सुखमर्प्यते (१४१)॥ दोषोपि गुणवद् भाति भूरि सौन्दर्यमाश्रितः। नेत्रयोर्भूषितावन्तावाकर्णाभ्याशमागतौ (१४२)॥ कारणाद् भावचैतन्यं प्रवदन्ति हि तद्विदः। कर्णयो र्भूषणे नेत्रे नेत्रयोः श्रव-णाविमौ (१४३)॥ कुण्डलाञ्जनयोरत्र नावकाशोस्ति कश्चन। न तद् युक्तं कटाक्षाणां विधाकरणं हृदि (१४४)॥

### प्रतिज्ञाभङ्गे तत्तत्पापप्रसङ्गः

यूथपरिभ्रष्टा नन्दा नाम गौ र्वने तृणलिप्सया विचरन्ती कदाचिद् व्याघ्रस्य संमुखे स्थिता। व्याघ्रश्च तामभ्यद्रवदवोचच्च—तिष्ठ तिष्ठ रे धेनुके, विधात्रा विहितो मे भक्षस्त्वमुपस्थितासीति। रोमहर्षणं निष्ठुर-मिदं वचो निशम्य गोष्ठस्थं स्वं वत्सं स्मरन्ती स्नेहाक्ता तद्दर्शने निराशा तं व्याघ्रं सगद्गदमगादीत्—क्षन्तुमर्हसि मे नाथ, नात्मानं शोचामि, जानामि क्षणभङ्गुरं जीवितमिति। प्रथमे वयसि वर्तमानाया मम प्रथम-जातः पुत्रकः क्षीरपायो नाद्यापि तृणमत्ति। स गोकुले बद्धो मां प्रतीक्षते क्षुधार्तः। तं शोचामि। तं स्तनं पाययित्वा मूर्धन्युपाघ्राय सखीभ्यः परि-दाय हिताहितं चोपदिश्यावश्यं प्रतिनिवर्त्स्यामि, तदा त्वं मां यथेष्टं भक्ष-यिष्यसीति। कः प्रत्ययस्त्वं प्रत्यागमिष्यसीति व्याघ्रेणानुयुक्ता सा तं तैस्तैः शपथैः प्रत्याययति। प्रतिज्ञां चेदतीयां शास्त्रोक्तानीमानि पापानि मयि सन्त्विति। एतै र्वाक्यैः पापस्वरूपं निरवशेषं निरूपितं भवतीति तानीह सङ्ग्रहेणानुक्रम्यन्ते—यत्पापं ब्रह्मवध्यायां मातापितृवधेषु च (१।१८।३२०)। तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः। यत्पापं लुब्धकानां तु म्लेच्छानां गरदायिनाम् (३२१)॥ तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः। गोषु विघ्नांश्च ये कुर्युः स्वपन्तीं ताडयन्ति च (३२२)॥ तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः। सकृद् दत्वा तु यः कन्यां द्वितीये दातु-मिच्छति (३२३)॥ तस्य पापेन लिप्येऽहं यद्यहं नागमे पुनः। यस्त्वनर्हान् बलीवर्दान् विषमे वाहयेत् पुमान् (३२४)॥ कथायां कथ्यमानायां विघ्नं कारयते तु यः। तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः (३२५)॥ गृहे यस्या-

गतं मित्रं निराशं प्रतिगच्छति। तस्य पापेन लिप्येऽहं यद्यहं नागमे पुनः (३२६)॥

### अगस्त्येन समुद्रस्य पाने हेतुः

वृत्रवधाभितप्ता दितिजा समेत्य मन्त्रयाञ्चक्रिरे, उपायांश्च चिन्तयाञ्चक्रिरे, जगद्-विनाशे च घोरां मतिं शिश्रियिरे। ते रात्रौ क्रोधाविष्टा यत्र तत्र मुनीनामाश्रमानुज्जासयमासुः, शतसहस्रशश्च तापसान् पातयामासुः। एवं नक्तं कदनं कुर्वन्तः प्रविविशुरर्णवं दिवा। न चैतानवाबुधन्मनुजा मुनयोऽपि वा भीताश्च प्राद्रवन् दिशो दश। महेष्वासाः शूरा अपि ये केचन समुद्रसंश्रितांस्तान्नानुजग्मुः। इत्थं कदर्थिताः प्राणान् परीप्सवस्ते त्रिदशा आपन्नानुकम्पिनं भगवन्तं चक्रपाणिं शरणं ययुः, आत्मत्राणं च बिभिक्षिरे। वेदाहं प्रजानां क्षयकारणम्। समुद्रस्य जलराशेः शोषणेऽभ्युपायश्चिन्त्यताम्। इत्युक्तास्ते तपोराशिं ज्वलन्तमिवादित्यं भगवन्तं मैत्रावरुणिमगस्त्यमभिगम्योचिरे—त्रायस्व दितिजैः पीडितान्नः, त्वं नो गतिरसि। वरमेकमद्भुतं वृण्महे पिबार्णवं महात्मन् समुद्रम्। पीते च तस्मिन्नशरणान्दैतेयान्सहेलं हनिष्यामः सानुबन्धान्। एवं प्रश्रितं प्रार्थितो दयार्द्रचेता मुनिपुङ्गवोऽगस्त्यः सन्निहितर्षिस्तोम ऊर्मिमन्तं निरवशेषं पपौ, निर्वैवार च दिविजवर्गः (१।१९।१३६-१७२)॥

### नारदकृता हिमवत्प्रशस्तिः

अहो धर्मोचितस्तेऽस्ति संनिवेशो महागिरे। पृथुत्वं मनसा तुल्यं कन्दराणां तवानघ (१।४५।१२२)॥ गुरुत्वं ते गुणौघानां स्थावरादतिरिच्यते। प्रसन्नता च तोयस्य मुनिभ्यश्चाधिका तव (१२३)॥ न लक्षयामः शैलेन्द्र कुत्राविनयता स्थिता। नानातपोभिर्मुनिभिर्ज्वलनार्कसमप्रभैः (१२४)॥ पावनैः पावितो नित्यं त्वं कन्दरसमाश्रयैः। अवमत्य विमानानि स्वर्गवासविरागिणः (१२५)॥ पितुर्गृह इवासीना देवगन्धर्वकिन्नराः (१२६)॥

### गजाननस्योत्पत्तिः

कदाचिद् गन्धतैलेन गात्रमभ्यज्य शैलजा। चूर्णैरुद्वर्तयामास मलेनापूरितां तनुम् (१।४५।४४५)॥ तदुद्वर्तनकं गृह्य नरं चक्रे गजाननम्। पुरुषं क्रीडती देवी तच्चाक्षिपदम्भसि (४४६)॥ जाह्नव्या शिवया सख्या ततः सोऽभूद् बृहत्तनुः। कायेनातिविशालेन जगदापूरयत्तदा (१२६)॥

### शङ्करस्य पार्वत्या समं नर्मालापः

वक्रोक्तिः काव्यजीवितमित्येके। सा च चेतश्चमत्कारी पदघटनाविशेषः, यं चर्चयन्नेव चित्रीयते विदग्धो जनः। न हि बहवो वक्रोक्तेरीशते नाम। अत्र पुराणैकदेशे स्थितां सरसां नर्मालापविषयां वक्रोक्तिमुदाहरामः—

### शङ्कर उवाच

शरीरे मम तन्वङ्गि सिते भास्यसितद्युतिः। भुजङ्गीवासिता शुभे संश्लिष्टा चन्दने तरौ (१।४६।१)॥ चन्द्रातपेन सम्पृक्ता रुधिराम्बर-संवृता। रजनीवासिते पक्षे दृष्टिदोषं ददासि मे (२)॥

### देव्युवाच

स्वकृतेन जनः सर्वो जाड्येन परिभूयते। अवश्यमर्थी प्राप्नोति खण्डनं शशिमण्डन (४)॥ तपोभिर्दीर्घचरितैर्यां त्वां प्रार्थितवत्यहम्। तस्या मे नियतस्त्वेष ह्यदमानः पदे पदे (५)॥ नैवास्मि कुटिला शर्व विषमा न च धूर्जटे। सविषस्त्वं जगत्ख्यातो व्यक्तदोषाकराश्रयः (६)॥ त्वं हि मुष्णासि दशनान् (पूष्णः) नेत्रहन्ता भगस्य च। आदित्यस्त्वां विजानाति भगवान् द्वादशात्मकः (७)॥ मूर्ध्नि शूलं जनयसि स्वैर्दोषैर्मामधिक्षिपन्। यस्त्वं मामात्थ कृष्णेति महाकालोऽसि विश्रुतः (८)॥ यास्याम्यहं परित्यक्तुमात्मानं तपसा गिरिम्। जीवन्त्या न मया कृत्यं धूर्तेन परिभूतया (९)॥ कापालिकेन क्षुद्रेण श्मशाने नित्यवासिना। विभूत्या लिप्तस्वाङ्गेन मातृमध्यस्थचारिणा (१०)॥

### शर्व उवाच

अगात्मजाऽसि गिरिजे नाहं निन्दापरस्तव। चाटूक्ति बुद्ध्या तु मया कृत उन्मादसंश्रयः (१२)। नर्मवादी भविष्यामि(=भवामि) जहि कोपं शुचि-स्मिते। शिरसा प्रणतेनैव रचितस्ते मयाञ्जलिः (१४)॥ सत्यं सर्वैरवयवैस्तनोषि सदृशं पितुः। हिमाचलस्य शृङ्गस्थमेघजालाकुलं मनः (१९)॥ तथा दुरवगाह्येभ्यो गहनो हि तवाशयः। काठिन्यमश्मसारेभ्यो वनेभ्यो बहुलं गता (२०)॥ कुटिलत्वं निम्नगाभ्यो दुःसेव्यत्वं हिमादपि। सङ्क्रान्तं सर्वमेवैतत् तन्वङ्गि हिमभूधरात् (२१)॥

### देव्युवाच

स्यात्सर्वं दोषदानेन निन्दायां गुणिनो बलात्। तवापि दुष्टसम्पर्कात् सङ्क्रान्तं सर्वमेव हि (२३)॥ व्यालेभ्योऽनेकजिह्वत्वं भस्मनोऽस्नेह-वृत्तिता। हृत्कालुष्यं शशाङ्कोत्थं दुर्बोधत्वं विषादपि (२४)॥ किं चात्र बहुनोक्तेन अलं वाचां श्रमेण ते। श्मशानवासान्निर्भीस्त्वं नग्नत्वात्तव न त्रपा। निर्घृणत्वं कपालित्वाद् दया ते विगता चिरम् (२५)॥ इत्युक्त्वा मन्दिरात्तस्मान्निजगाम हिमाद्रिजा (२६)।

गणानामेकतमेन वीरकेण क्व मातर् यासीति पृष्टा साऽऽह—

कृष्णेत्युक्ता हरेणाहं स्तम्भितास्म्यवमानिता। साहं तपः करिष्यामि येन गौरीत्वमाप्नुयाम्॥

### क्षुद्वेदना

महत्यामनावृष्टौ भिक्षामलभमानाः कृच्छ्रेण ऋषयो राज्ञः प्रतिग्रह-मप्रतीच्छन्तः प्रसङ्गात् क्षुद्वेदनां वर्णयन्ति। सा वर्णना हृदयग्रहणीया

प्रत्यक्षरं सत्येति संगृह्यते—

शक्तिखड्गगदाभिश्च चक्रतोमरसायकैः (१।१६।२७८)। बाधिते वेदना या तु क्षुधया सापि निर्जिता। श्वासकुष्ठक्षयाष्ठीलीज्वरापस्मार-शूलकैः (२७६) ॥ व्याधिभिर्जनिता सापि क्षुधाया नाधिका भवेत्। हिरण्याङ्गदकेयूरमुकुटोज्ज्वलकुण्डलाः (२८०)॥ क्षुधायां न विराजन्ते तत्र ये संस्थिता नराः। यथा भूमिगतं तोयं रविरश्मि विकर्षति (२८१)॥ तद्वच्छरीरज, नाड्यः शोष्यन्ते जठराग्निना। न शृणोति न चाघ्राति चक्षुषा नैव पश्यति (२८२)॥ दह्यते क्षीयते मूढः शुष्यते क्षुधयार्दितः। न पूर्वां दक्षिणां चापि पश्चिमां नोत्तमामपि (२८३)॥ न चाधो नैव चोर्ध्वं च क्षुधाविष्टोहि विन्दति। मूकत्वं बधिरत्वं च जडत्वमथ पङ्गुता २८४)॥ भैरवत्वममर्यादं क्षुधायाः संप्रवर्धते। जनकं जननीं पुत्रान्भार्यां दुहितरं तथा (२८५)॥ भ्रातरं स्वजनं चापि त्यजति क्षुधयार्दितः। न पितॄन् पूजयेत् सम्यग्देवं चापि गुरुं तथा (२८६)॥ ऋषीनुपागतांश्चापि क्षुधाविष्टो न वन्दते (२८७)॥

## एकादश रुद्राः

निर्ऋतिश्चैव सन्ध्यश्च तृतीयश्चाप्ययोनिजः। मृगव्याधः कपर्दी च महाविश्वेश्वरश्च यः (१।४२।८४)॥ अहिर्बुध्न्यश्च भगवान् कपाली चैव पिङ्गलः। सेनानीश्च महातेजा रुद्राश्चैकादश स्मृताः (८५)॥

## द्वादशादित्याः

इन्द्रो विष्णु र्भगस्त्वष्टा वरुणोंशोऽर्यमा रविः। पूषा मित्रश्च वरदो धाता पर्जन्य एव हि (१।१४२।१०१)॥ इत्येते द्वादशादित्या वरिष्ठास्त्रिदिवौकसाम् (१०२)॥

## विश्वेदेवाः

विश्वेदेवाश्च विश्वायां धर्माज्जाता इति स्मृताः (१।४२।६३)॥ दक्षश्चैव महाबाहुः पुष्करस्तम एव च। चाक्षुषश्च ततोऽग्निश्च तथा भद्रमहेश्वरौ (६४)। विश्वान्तकवसु र्बालो निकुम्भश्च महायशाः। रुरुदुश्चातिसिद्धौजा भास्करप्रमितद्युतिः (६५)॥

## शशलक्ष्म

लोकच्छायामयं लक्ष्म तवाङ्कः शशविग्रह (१।४३।१२८)॥ कालिदासो प्येतत्संवादिनमर्थमाह रघौ—छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः।

## चन्द्रमसः स्थितिः

न विदुः सोम ते मायां ये च नक्षत्रयोनयः। त्वमादित्यपथाद् ऊर्ध्वं ज्योतिषां चोपरि स्थितः (१।४३।१२६)॥ तदिदं वैज्ञानिका न सहन्ते। किमिदमज्ञानविजृम्भणमुत स्तुत्यातिशयोक्तिः।

### कालनेमे र्दानवस्य भयदं रूपम्

भास्कराकारमुकुटः शिञ्जिताभरणाङ्गदः। मन्दराद्रिप्रतीकाशो महारजतसंवृतः (१।४३।१७१) ॥ शतप्रहरणोदग्रः शतबाहुः शताननः। शतशीर्षः स्थितः श्रीमाञ्शतशृङ्ग इवाचलः (१७२) ॥ कक्षे वहति संवृद्धो निदाघ इव पावकः। धूम्रकेशो हरिश्मश्रु र्दन्तुरो विकटाननः (१७३) ॥ त्रलोक्यान्तरविस्तारं धारयन् विपुलं वपुः। बाहुभिस्तुलयन्व्योम। क्षिपन्पद्भ्यां महीधरान् (१७४) ॥ ईरयन्मुखनिश्वासै र्वृष्टिकारान् बलाहकान्। तिर्यगायतरक्ताक्षं मन्दरदोग्रवर्चसम् (१७५) ॥ दिधक्षन्तमिवायातः सर्वान् देवगणान्मृधे। तर्जयन्तं सुरगणांश्छादयन्तं दिशो दश (१७६) ॥

### षड् आततायिनः

अग्निदो गरदश्चैव धनहारी च सुप्तगः। क्षेत्रदारापहारी च षडेते ह्याततायिनः (१।५०।५८) ॥

### का नाम पतिव्रता

पुत्राच्छतगुणं स्नेहाद्राजानं च भयादथ। आराधयेत्पतिं शौरिं या पश्येत्सा पतिव्रता (१।५२।५७) ॥ कार्ये दासी रतौ वेश्या भोजने जननीसमा। विपत्सु मन्त्रिणी भर्तुः सा च भार्या पतिव्रता (५८) ॥ भर्तुराज्ञां न लङ्घयेद् या मनोवाक्कायकर्मभिः। भुक्ते पत्यौ सदा चात्ति सा च भार्या पतिव्रता (५९) ॥ नैव मत्सरमायाति न कार्पण्यं न मानिनी। मानेऽमाने समानं च या पश्येत् सा पतिव्रता (६१) ॥ सुवेषं वा नरं दृष्ट्वा भ्रातरं पितरं सुतम्। मन्यते च परं साध्वी सा च भार्या पतिव्रता (६२) ॥

### न स्त्री स्वातन्त्र्यमर्हति

पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति (१।५४।२३) ॥ अरक्षणाद्यथा पाकः श्वकाकवशगो भवेत्। तथैव युवती नारी स्वच्छन्दा दुष्टतां व्रजेत् (२५) ॥

### षट्सु कन्या न देया

अत्यासन्नेऽतिदूरस्थे चात्याढ्ये चातिदुर्गते। कुलहीने च मूर्खे च षट्सु कन्या न दीयते (१।५४।६७) ॥

### सदाचारः

आचारः परमो धर्म इत्युक्तम्। स आचारः किंलक्षणस्तत्राह—

न भुञ्जीतैकवस्त्रेण न स्नायादेकवाससा। न धारयेत् परस्यैवं स्नानवस्त्रं कदाचन (१।५१।८६) ॥ संस्कारं केशदन्तानां प्रातरेव समाचरेत्। गुरूणां च नमस्कारं नित्यमेव समाचरेत् (८७) ॥ हस्तपादे मुखे चैव पञ्चार्द्रो भोजनं चरेत्। पञ्चार्द्रकस्तु भुञ्जानः शतं वर्षाणि जीवति

(८८) ॥ देवतानां पुरो राज्ञां स्नातकाचार्ययोरपि । नाक्रामेत् कामतश्छायां विप्रस्य दीक्षितस्य च (८६) ॥ गोविप्रावग्निविप्रौ च विप्रौ द्वौ दम्पती तथा । तयो र्मध्ये न गच्छेत स्वर्गस्थोपि पतेद् ध्रुवम् (६१) ॥ न क्षौरं कारयेद् धीरः कुजस्याह्नि कदाचन। मलं न धारयेद् दन्ते नखं न वदने क्षिपेत् (६७) ॥ पतितं कुष्ठसंयुक्तं चाण्डालं च गत्राशिनम् । निर्धूतं ज्ञानहीनं च दूरतः परिवर्जयेत् (१०२) ॥ शयनं चार्द्रपादेन शुष्कपादेन भोजनम्। नान्धकारे च शयनं भोजनं नैव कारयेत् (१२४) ॥

### दुर्वाससः शापेन धर्मराजस्य त्रैरूप्येण जन्म

भरतानां कुले जातो धर्मो भूत्वा युधिष्ठिरः । विदुरो दासीपुत्रस्तु अन्य चैव वदाम्यहम् । यदा राजा हरिश्चन्द्रो विश्वामित्रेण कर्षितः । तदा चाण्डालतां प्राप्तः स हि धर्मो महामतिः (२।१२।१२७, १२८) ॥

### वृत्रासुरोत्पत्तिः

हिरण्याक्षादिषु दितिपुत्रेषु चक्रपाणिना हतेषु देवाः स्वं स्वमास्पदं प्रतिलेभिरेऽतिमात्रं च मुमुदिरे । दितिस्तु शुचा परीता पतिं कश्यपमुपेत्य प्रार्थयाञ्चक्रे--हतपुत्रा दीनास्मि जाता, पुत्रं मय्युत्पादय सर्वतेजोहरं देवराजसमप्रभम् । बाढं त्वयीत्थम्भूतः पुत्रो जनिष्यत इत्युदीर्य तस्या मूर्ध्नि स्वकरं निधाय मेरुं गिरिं तपसे प्रतस्थे । अत्रान्तरे दिति गर्भमादधे वर्षशतात्यये च पुत्रं सुषुवे । कश्यपश्च प्रतिनिवृत्तस्तस्य बल इति नाम चक्रे विधिवच्च तमुपनिन्ये । ततो बलस्तिग्मं तपस्तेपे, ब्रह्मचर्यं च साग्रं वर्षशतमुवास । तप्ततपाः संशितव्रतो महातेजाः स मातरं ददर्श । हर्षप्रकर्षपर्यन्तं गता माता तमभिसम्बोध्याह—वैरं निर्यातय पुत्र, प्रथमं पाकशासनं शातय, ततो गरुडवाहनं ततोऽन्यांश्च दैवतान् । मातुराज्ञां शेषामिव शिरसाऽऽदाय सन्ध्यार्थं जलधिमुपशिश्रिये । अत्रान्तरे विदितवृत्तान्तो महेन्द्रो महतीं चिन्तामापन्नस्तद्वधार्थमुद्येमे । तत्रैवोपेत्य परमं जपं जपन्तं परमं तत्त्वं च चिन्तयन्तं दिव्येनाशनिना सहसा जघान जहर्ष च । भूयोपि दुःखसागरे निमग्ना दितिः करुणं क्रन्दन्ती पतिं कश्यपमुपेयाय दुःखं च स्वव्यक्तिं निनाय । क्रोधेन प्रज्वलन्निव स महामुनिरिन्द्रस्य वधार्थाय पुत्रमेकमुत्पादयामीति ब्रुवन् जटामेकामवलुच्य शुचावग्नौ प्रचिक्षेप। ततो हुताशनकुण्डाद् घोरः कृष्णाञ्जनसवर्णो दंष्ट्राकरालवक्त्रः खड्गी चर्म्मी कश्चित्सत्त्वः समुत्तस्थौ । समुत्तिष्ठन्नेव च निजगाद—कस्मादहमुत्पादित इति । एवं पृष्टः कश्यपः प्रत्याह--पुत्र मम च दित्याश्च मनोरथं पूरय, जहि महेन्द्रं दुरात्मानमिति । योऽयं जज्ञे स एव वृत्रो न चान्यः ।

सेयं पौराणी कथा किन्निबन्धना किम्प्रमाणा वेति मीमांस्यम् । तैत्तिरीयिणस्त्वन्यथाऽऽचक्षते । दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतो-





ऽपराधात् इत्यत्र व्याकरणमहाभाष्य एषाऽऽरात् प्रत्यवमृष्टा। अत्रेत्थमामनन्त्यैतिह्यम्—विश्वरूपे स्वे पुत्रे इन्द्रेण हते तस्य घातायाभिचारयागं प्रकुर्वाणस्त्वष्टा स्माह—इन्द्रशत्रुवर्धस्व। अत्रानवधानात्स स्वरेऽपाराध्यत्। शत्रुशब्दं शातयितर्यर्थेऽभिप्रयन्नपि षष्ठीसमासमनाश्रित्यान्तोदात्त चाकृत्वा बहुव्रीहिसमाश्रयेणाद्युदात्तमुदीरयामास। तेन जायमानस्य धातुकस्य सत्त्वस्येन्द्रः शातयिता घातकः सम्पेदे, अनिष्टं च महदापेदे।

### वृत्रवधकथा

इह पुराणे वृत्रवधकथाऽप्यन्यथाऽऽख्याता। तत्रापि मूलं मृग्यम्। अयमत्र कथासारः। वृत्रवधे सचिन्तो भीतभीतो महेन्द्रः सप्तर्षीन्प्रेषयति वृत्राय। ते तमुपेत्यैवं सन्दिशन्ति—देवराजस्त्वया समं मैत्रीमिच्छति, तत्कथं न कुरुषे। वैरं समुत्सार्य सन्धास्यै, यदि तत्र कपटप्रयोगो न स्यात्। प्रत्ययो मे दीयतामिति वृत्रोऽगदीत्। इन्द्रं प्रति निवृत्ताः सप्तर्षयः प्राहुः—प्रत्ययं वृत्रोऽभिवाञ्छति, स प्रदीयतामिति। छद्मना चेत् प्रवर्तिष्ये ब्रह्महत्यादोषेण लेप्स्य इत्यृषीन् समदिशद् वृत्राय। एवं प्रलोभ्य विश्वास्य च तं दिवं प्रत्यागमेन न्यमन्त्रयत महच्च तं सममानयत, अर्धं च स्वं पदं समार्पयत। जिह्मवृत्तिं च नाहापयत। सततं तद्वधमचिन्तयत। येन केनोपायेन स हन्तव्य इति सततं चिन्तयति। अप्सरसामुत्तमां रम्भां च तद्विमोहाय प्रयुङ्क्ते। सखीसमेता सा कमनीयं नन्दनं काननं प्रविशति सविभ्रमं च क्रीडति, दोलारूढा च सखीभिः समं गायति। वृत्रोपि कतिपयैर्दानवैः सहचरितो विहर्तुकामस्तत्रैवायाति। सा च ततो नातिदूरेऽलक्ष्या सती भ्रमति। अथ वृत्रस्तद्गीतमाधुर्येण हृतचेताः पञ्चशरशराहतस्तत्रैवोपैति पृच्छति च कात्रभवती, केन सम्प्रेषिता किमर्थमिहागतेति। अहमस्मि रम्भा नामाप्सराः क्रीडार्थं वनमिदमुत्तमं प्रविष्टेति सा प्रत्याह। ततो वृत्रः स्वं प्रत्याययति। त्रिलोक्यां सर्वस्य विदितो वृत्रो नाम दानवोऽहम्, तवैव तु कथमविदितः। इन्द्रेण दत्तार्धराज्यः परं मैत्रकं गत इह प्राप्तः। त्वां दृष्ट्वा कामाकुलितोस्मि जातः, भज मां भजमानम्, त्वं हि मे शरणमसीति मितं व्याहरद् वचः। अद्यैव ते वशगा भविष्यमि यदि यद् यदहं वक्ष्यामि तत्तदेव त्वं करिष्यसि। अयं मे कामः—सुरापानं कुरुष्व पीयस्व मधुमाधवीमिति रम्भोक्तिमाकर्ण्य वृत्रो वक्ति—पुत्रोहं ब्राह्मणस्यापि वेदवेदाङ्गपारगः। सुरापानं कथं भद्रे करिष्यामि विनिन्दितम् इति। अथ रम्भया स बलात् सुरां पायितः, अतिमोहं च सम्प्रापितः। ततश्छिद्रान्वेषी छाद्मिको लब्धावसर इन्द्रो ज्ञानभ्रष्टं वृत्रं वज्रेणैकपदे हन्तीति वृत्रवधकथा। वृत्रो जायमान एव ननाशेति तु तैत्तिरीयिणः।

### मरुतां समुत्पत्तिः

मरुतो नाम देवाः संख्ययैकोनपञ्चाशद् इन्द्रस्य सहायाः प्रसिद्धाः। तेषामिन्द्रः प्रभुरीशः तस्मात्स मरुत्त उच्यते मरुत्वानिति च। बलवता-

मुतमस्य तस्य नाच्छलं कृत्यमस्ति। मरुतामुत्पत्तावपि च्छलप्रयोगः स्थितो यथान्यत्र। एषाऽत्र तत्कथा सङ्गृह्यते पुराणस्था (१।७)—बलवृत्रयोरिन्द्रेण हतयो र्दुःखिनी दितिः पुनरपि पतिं कश्यपं प्रार्थयते—पुत्रघातकस्येन्द्रस्य घाताय पुत्रान्तरमुत्पाद्यतां येनाहं सफलं सपुष्पं तस्मिन्वैरं निर्यात्य सुखिनी स्यामिति। कश्यपश्च तां सान्त्वयन्नाह—पुत्रं ते दास्यामि यो दुरात्मानं महेन्द्रं हनिष्यति, वर्षशतं त्वं व्रतस्था भवेति। ततो दितेः शिरसि करं न्यस्य मेरुं निर्जगाम तपसे महीयसे। सापि पुत्रार्थिनी महत्तपश्चचार। इन्द्रोपि सर्वमुदन्तमुपलेभे चिन्तां चातुलां लेभे। पञ्चविंशतिवर्षो विप्रवेषो भूत्वा दितेरन्तिकमियायान्तरं प्रतीक्षमाणः। कस्त्वमिति दित्या पृष्टः स आह—मातर् वेदविद् धर्मज्ञो वाडवोऽहं त्वच्छुश्रूषया त्वामुपेतस्ते तपसि सहायो भविष्यामीति। नित्यमुपचर्यमाणा विविधं चाराध्यमाना दितिरिन्द्रं धर्मपुत्रं विजानती तस्मिन्नितरां तुष्यति विस्रम्भते च। विस्रब्धा सती कदाचित्तमभिसम्बोध्याह—मयि पुत्रे जाते इन्द्रे च निधनं नीते तेन मे पुत्रेण साकं राज्यं करिष्यसीति। एवमस्त्विति प्रीयमाणः स्माह महेन्द्रः। नित्यं चान्तरं प्रेप्सुरभूत्। अथ पूर्णेऽब्दशते स चिरप्रतीक्षितमन्तरं विवेद। एकदा दितिःपादशौचमकृत्वा शयनीयमध्यशेत। शयनीयान्ते शिरः कृत्वा व्याकुलमूधजा विह्वला निद्रामुपैत्। तत इन्द्रो वज्रपाणिः कुक्षिं प्रविश्य वज्रेण तीक्ष्णेन सप्तधा विचकर्त गर्भम्। उदरे कृत्तः स गर्भोऽरुदत्। शतक्रतुश्चावोचन्मा रोदीरिति। रुदन्तं तं गर्भं मा स्म रुद इति भूयो ग्रवादीत्। रोदनं च न व्यरंसीत्। ततो भूयः सप्तधाऽकर्तीत्। एवमेकैकं सप्तधाऽच्छेत्सीत्, तेन त एकोनपञ्चाशज्जज्ञिरे। यस्मादिन्द्रेण मा रुदतेत्युक्तास्तस्मान्मरुतो नाम संववृतिरे, इन्द्रमेव च संशिश्रियिरे॥

### स्त्रीणां सुभगंकरणा गुणाः

रूपमेव गुणः स्त्रीणां प्रथमं भूषणं शुभे। शीलमेव द्वितीयं च तृतीयं सत्यमेव च (२।३४।३०)॥ आर्जवत्वं चतुर्थं च पञ्चमं धर्ममेव वरानने (३१)॥ शुद्धत्वं सप्तमं बाले अन्तर्बाह्येषु योषिताम्। अष्टमं हि पितुर्भावः शुश्रूषा नवमं किल (३२)॥ सहिष्णुर्दशमं प्रोक्तं रतिश्चैकादशं तथा। पातिव्रत्यं तथा प्रोक्तं द्वादशं वरवर्णिनि (३३)॥

### न जातु कश्चिददोषो नाम

अत्र निदर्शनान्युदाहरति पुराणकारः—ब्रह्महत्या प्रयुक्तोऽसौ देवराजोपि पश्य भोः। देवैः सार्धं महाभागो भुङ्क्ते लोकत्रयं महान् (२।३४-२०)॥ गौतमस्य प्रियां भार्यामहल्यां गतवान्पुरा। परदाराभिलाषी स देवत्वे परिवर्तते (२१)॥ ब्रह्महत्योपमं कर्म दारुणं कृतवान्हरः। ब्रह्मणस्तु कपालेन चाद्यापि परिवर्तते (२२)॥ देवा नमन्ति तं देवमृषयो वेदपारगाः। आदित्यः कुष्ठसयुक्तस्त्रैलोक्यं च प्रकाशयेत् (२३)॥ लोका नमन्ति तं देवं देवाद्याः सचराचराः। कृष्णो भुङ्क्ते महापापं भार्ग-

वेण पुरा कृतम् (२४) ।। गुरुभार्यां गतश्चन्द्रः क्षयी तेन प्रजायते । भवि-ष्यति महातेजा राजराजः प्रतापवान् (२५) ।। पाण्डुपुत्रो महाप्राज्ञो धर्मात्मा स युधिष्ठिरः । गुरोश्चवै वधार्थाय अनृतं स वदिष्यति (२६) ।। एतेष्वेव महत्पापं वर्तते च महत्सु च । वैगुण्यं कस्य वै नास्ति कस्य नास्ति च लाञ्छनम् (२७) ।।

**वेनस्य क्षत्रियत्वप्राप्तिः**

वेनो नामात्रितनयादङ्गाद् धर्मसुतायां सुनीथायां जज्ञे । जन्मना वेदवेदाङ्गविद् विप्रो बभूव । सहजेन तेजसा दित्रि दिवाकर इव बभौ । चाक्षुषवैवस्वतयोर्मन्वन्तरयोः सन्धौ लोकोऽयं प्रजापालविरहेण भृशम-सीदत् । तत्र ऋषयः समेत्य मन्त्रयाञ्चक्रिरे धर्मज्ञं जयपण्डितं वेनमुप-लभ्य तं पृथ्वीराज्येऽभिषिषिचुः । स च धर्मतः प्रजाः स्वाः प्रजा इव चिरं शशास यावदस्य सुशङ्खर्षैः शापान्मतिविपर्ययो नाभूत् ।

**दाने पात्रापात्रयोर्विमर्शः**

ब्राह्मणं सुकुलोपेतं वेदाध्ययनतत्परम् । शान्तं तपोयुक्तं शुक्लमेव विशेषतः (२।३९।१०) ।। प्रज्ञावन्तं ज्ञानवन्तं देवपूजनतत्परम् । सत्यवन्तं महापुण्यं वैष्णवं ज्ञानपण्डितम् (११) ।। धर्मज्ञं मुक्तलौल्यं च पाखण्डैस्तु विवर्जितम् । एवं पात्रं समाख्यातमन्यदेवं वदाम्यहम् (१२) ।। एवमेतै-र्गुणै र्युक्तं स्वसृपुत्रं नरोत्तम । एतं पात्रं विजानीहि दुहितुस्तनयं ततः (१३) ।। जामातरं महाराज भावैरेतैश्च संयुतम् । गुरुं च दीक्षितं चैव पात्रभूतं नरोत्तम (१४) ।। वेदाचारसमोपेतस्तृप्ति नैव च गच्छति (१५) ।। वर्जयेत् किल तं विप्रं तथा काणं सुघूर्त्तकम् । अतिकृष्णं महाराज कपिलं परिवर्जयेत् । (१६) । कर्कटाक्षं सुनीलं च श्यावदन्तं विवर्जयेत् । नीलदन्तं तथा राजन्पीतदन्तं तथैव च (१७) ।। गोदन्तं कृष्णदन्तं च बर्बरं चातिपांसुलम् । हीनाङ्गाधिकाङ्गं च कुष्ठिनं कुनखं तथा (१८) ।। दुश्चर्माणं महाराज खल्वाटं परिवर्जयेत् । अन्यायेषु रता यस्य जाया विप्रस्य कस्यचित् (१९) । तस्मै दानं न दातव्यं यदि ब्रह्मसमो भवेत् । स्त्रीजिताय न दातव्यं शाखारण्डे महामते (२०) ।। व्याधिताय न दातव्यं मृतभोजिषु भूपते । चोराय न दातव्यं स यद्यग्निसमो भवेत् (२१) ।। वेद-शास्त्रसमायुक्तः सदाचारेण वर्जितः । श्राद्धे दाने च राजेन्द्र नैव युक्तः कदा भवेत् (२३) ।।

**गीतस्तुतिः**

गीतं सर्वरसं प्रोक्तं गीतमानन्ददायकम् । शृङ्गाराद्या रसाः सव गीतेनापि प्रतिष्ठिताः (२।४६।२६) ।। शोभामायान्ति गीतेन वेदाश्चत्वार उत्तमाः । गीतेन देवताः सर्वास्तोषमायान्ति नान्यथा (२७) ।।

**गार्हस्थ्यस्य सर्वातिशायिता**

पुण्यभार्याप्रयोगेण गार्हस्थ्यं सम्प्रजायते । गार्हस्थ्यात्परमो धर्मो

द्वितीयो नास्ति भूतले (२।५९।१६) ॥ गार्हस्थ्यं चैव समाश्रित्य सर्वे जीवन्ति जन्तवः। तादृशं नैव पश्यामि अन्यमाश्रममुत्तमम् (१८) ॥ नास्ति भार्या-समं तीर्थं नास्ति भार्यासमं सुखम्। नास्ति भार्यासमं पुण्यं तारणाय हिताय च (२४) ॥

## मातापितृशुश्रूषा

वेदैरपि च किं विप्र पिता येन न पूजितः। माता न पूजिता येन तस्य वेदा निरर्थकाः (२।६३।१९)। यज्ञैश्च तपसा विप्र किं दानैः किं च पूजनैः। प्रयाति तस्य वैफल्यं न माता येन पूजिता (२०) ॥ न पिता पूजितो येन जीवमानो गृहे स्थितः। एष पुत्रस्य वै धर्मस्तथा तीर्थं नरेष्विह (२१) ॥ एष पुत्रस्य वै मोक्षस्तथा जन्मफलं शुभम्। एष पुत्रस्य वैयज्ञो दानमेव न संशयः (२२) ॥

सृष्टिखण्डे किञ्चिदधिकमुक्तम्। तदपीह संगृह्यते प्रतिपाद्यस्य कात्स्न्याय—पिता धर्मः पिता स्वर्गः पिता हि परमं तपः। पितरि प्रीति-मापन्ने प्रीयन्ते सर्वदेवताः (१०) ॥ सर्वतीर्थमयी माता सर्वदेवमयः पिता। मातरं पितरं तस्मात्सर्वयत्नेन पूजयेत् (११) ॥ मातरं पितरं चैव यस्तु कुर्यात् प्रदक्षिणम्। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा (१२) ॥ जानु-नी च करौ यस्य पित्रोः प्रणमतः शिरः। निपतन्ति पृथिव्यां सो अक्षयां लभते दिवम् (१३) ॥

## गर्भस्थस्य जन्तोः क्रमिकोऽङ्गाद्युपचयः

शुक्रस्य सहरक्तस्य एकाहात्कललं भवेत्। पञ्चरात्रेण कलले बुद्बुदत्वं ततो भवेत् (२।६६।३०) ॥ मांसत्वं मासमात्रेण पञ्चधा जायते पुनः। ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम्। (२।६२।३१) ॥ पाणी पादौ तथा पार्श्वौ कटिर्गात्रं तथैव च। मासद्वयेन पर्वाणि क्रमशः संभवन्ति च (३२) ॥ त्रिभिर्मासैः प्रजायन्ते शतशोऽङ्कुरसन्धयः। मासैश्चतुर्भि-र्जायन्ते अङ्गुल्यादि यथाक्रमम् (३३) ॥ मुखं नासा च कर्णौ च मासै-र्जायन्ति पञ्चभिः। दन्तपङ्क्तिस्तथा जिह्वा जायते तु नखाः पुनः (३४) ॥ कर्णयोश्च भवेच्छिद्रं षण्मासाभ्यन्तरे पुनः। पायुर्मेढ्रमुपस्थं च शिश्नश्चा-प्युपजायते (३५) ॥ सन्धयो ये च गात्रेषु मासं जायन्ति सप्तभिः। अङ्ग-प्रत्यङ्गसम्पूर्णं शिरः केशसमन्वितम् (३६) ॥ विभक्तावयवं स्पष्टं पुनर्मासेऽष्टमे भवेत्। पञ्चात्मकसमायुक्तः परिपक्वः स तिष्ठति (३७) ॥ मातुराहारवीर्येण षड्विधेन रसेन च। नाभिसूत्रनिबद्धेन वर्धते स दिने दिने (३८) ॥

## भावशुद्धिः परं शौचम्

भावशुद्धिः परं शौचं प्रमाणं सर्वकर्मसु (२।६६।८६) ॥ अन्यथाऽऽ-लिङ्ग्यते कान्ता भावेन दुहिताऽन्यथा। मनसा भिद्यते वृत्तिरभिन्नेष्वपि वस्तुषु (८७) ॥ अन्यथैव सती पुत्रं चिन्तयेदन्यथा पतिम् (२।६६।८८) ॥





**को नाम व्याधिः, कतिविधश्च मृत्युः**

वातपित्तकफदोनां वैषम्यं व्याधिरुच्यते (२।६६।११६) ॥ रोगैर्नानाविधैर्याति देही दुःखान्यनेकधा। तानि च स्वात्मवेद्यानि…(१२१)॥ एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम्। तत्रैकः कालसंयुक्तः शेषाश्चागन्तवः स्मृताः (१२२)॥ ये त्विहागन्तवः प्रोक्तास्ते प्रशाम्यन्ति भेषजैः। जपहोमप्रदानैश्च कालमृत्युर्न शाम्यति (१२३)॥ पीडितं सर्वरोगाद्यैरपि धन्वन्तरिः स्वयम्। स्वस्थीकर्तुं न शक्नोति कालप्राप्तं न चान्यथा (१२६)॥ नौषधं न तपो दानं न माता न च बान्धवाः। शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् (१२७)॥

**तृष्णा दुःखा च लाघवकरी च**

…नरणात्प्रार्थनाद् दुःखमधिकं हि विवेकिनाम् (२।६६।१३८)॥ क्षणिकं मरणे दुःखमनन्तं प्रार्थनाकृतम्। जगतां पतिरर्थित्वाद्विष्णुर्वामनतां गतः (१३६)॥ अधिकःकोऽ परस्तस्माद्यो न यास्यति लाघवम् (१४०)॥ न नरं प्रार्थयेद् भूयस्तृष्णा लाघवकारणम्। आदौ दुःखं तथा मध्ये दुःखमन्ते च दारुणम् (१४१)॥

**जरायाः पञ्च हेतवः**

शीतमध्वा कदन्नं च वयोतीताश्च योषितः। मनसः प्रातिकूल्यं च जरायाः पञ्च हेतवः (२।७८।२६)॥

**कालमहिमा**

अन्तर्जलचरो मत्स्यः सोपि जालेन बध्यते २।८१।३३॥ मरुत्समानवेगोपि मृगः प्राप्नोति बन्धनम्। योजनानां सहस्रेपि आमिषं वीक्षते खगः (३४)॥ स कण्ठलग्नपाशं च न पश्येद् दैवमोहितः। स वैषम्यकरः कालः कालः सम्मानहानिदः (३५)॥ परिभावकरः कालो यत्र कुत्रापि तिष्ठतः (पुरुषस्य)। नरं करोति दातारं याचितारं च वै पुनः (३६)॥ भूतानि स्थावरादीनि दिवि वा यदि वा भुवि। सर्वं कलयते कालः कालो ह्येक इदं जगत् (३७)॥ अनादिनिधनो धाता जगतः कारणं परम्। लोकान्कालः स पचति वृक्षे फलमिवाहितम् (३८)॥ त्रयः कालकृताः पाशाः शक्यन्ते नातिवर्तितुम्। विवाहो जन्म मरणं यदा यत्र तु येन च (४०)॥

**अपरिहार्यः कर्मविपाकः**

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्। तथा शुभाशुभं कर्म कर्तारमनु गच्छति। उपभोगादृते तस्य नाश एव न विद्यते (२।८१।५३-५४)॥ प्राक्तनं बन्धनं कर्म कोऽन्यथा कर्तुमर्हति। सुशीघ्रमपि धावन्तं विधानमनुधावति (५५)॥ शेते सह शयानेन पुरा कर्म यथा कृतम्। उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति (५६)॥ करोति कुर्वतः कर्मच्छाये-

वानु विधीयते । यथा च्छायातपौ नित्यं सुसम्बद्धौ परस्परम् (५७) ।। पीड-यन्ति नरं पश्चात् पीडितं पूर्वकर्मणा । येन यत्रोपभोक्तव्यं सुखं वा दुःखमेव वा(५६) ।। स तत्र बद्ध्वा रज्ज्वा वै बलाद् दैवेन नीयते (६०) ।। तैलक्षयाद् यथा दीपो निर्वाणमधिगच्छति ।। कर्मक्षयात्तथा मृत्युस्तत्त्वविद्भिरुदाहृतः (२।८१।६४-६५) ।। स्वकृतं भुज्यते वैश्य काले काले पुनः पुनः । एकः करोति कर्माणि एकस्तत्फलमश्नुते (३।३१।८) ।। अन्यो न लिप्यते वैश्य कर्मणाऽन्यस्य कुत्रचित् (६) ।। विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् । कर्मदायादका लोके कर्मसम्बन्धिबान्धवाः (२।९४।१०) ।।

### को ब्रह्महा भवति

ब्राह्मणं यः समाहूय याचमानमकिञ्चनम् । पश्चान्नास्तीति यो ब्रूयात्स वै ब्रह्महा नृप (२।६७।५१) ।। यस्तु विद्याभिमानेन निस्तेजयति वै द्विजम् । उदासीनं सभामध्ये ब्रह्महा स प्रकीर्तितः (५२) ।। मिथ्यागुणैरथा-त्मानं नयत्युत्कर्षतां पुनः । गुरुं विरोधयेद्यस्तु स च वै ब्रह्महा स्मृतः (५३) ।। क्षुत्तृषातप्तदेहानामन्नभोजनमिच्छताम् । यः समाचरते विघ्नं तमाहु-र्ब्रह्मघातकम् (५४) ।।

### देवत्रय्या एकत्वम्

त्रयाणामपि देवानामन्तरं नास्ति शोभने । ब्रह्मा समर्चितो येन शङ्करो वा वरानने (२।८८।४३) ।। तेनाहम् (हृषीकेशः) अर्चितो नित्यं नात्र कार्या विचारणा । एतौ ममाभिन्नतरौ, नित्यं चापि त्रिरूपवान् (४४) ।।

### दानस्य माहात्म्यम्

दानान्न दुष्करतरं पृथिव्यामस्ति किंचन···(२।९४।४३) ।। परि-त्यज्य प्रियान् प्राणान् धनार्थं लोभमोहिताः । प्रविशन्ति नरा लोके समुद्र-मटवीं तथा (४४) ।। सेवामन्ये प्रपद्यन्ते श्ववृत्तिरिति या स्थिता । हिंसा-प्रायां बहुक्लेशां कृषिं चैव तथा पुनः (४५) ।। तस्य दुःखार्जितस्यापि प्राणेभ्योपि गरीयसः । अर्थस्य पुरुषव्याघ्र परित्यागः सुदुष्करः (४६) ।। विशेषतो महाराज तस्य न्यायार्जितस्य च (४७) ।।

### के निरयगामिनः

कैः कर्मभिर्नरा नरकं यान्तीति सुबाहुना नृपतिना पृष्टो मुनि-र्जैमिनि निरयगामिनः साकल्येनाह—नास्तिका भिन्नमर्यादाः कन्दर्पविषयो-न्मुखाः । दाम्भिकाश्च कृतघ्नाश्च ते वै निरयगामिनः (२।९६।३) ।। ब्राह्मणेभ्यः प्रतिश्रुत्य न प्रयच्छन्ति ये धनम् । ब्रह्मस्वानां च हर्तारो नरा निरयगामिनः (४) ।। सुकूपानां तडागानां प्रपाणां च परन्तप । सरसां दूषकाश्चैव ते वै निरयगामिनः (८) ।। प्रव्रज्यादूषका राजन्ये चैवाश्रम-दूषकाः । सखीनां दूषकाश्चैव ते वै निरयगामिनः (१०) ।। काष्ठै र्वा शङ्कुभि र्वापि शूलैरश्मभिरेव वा । ये मार्गमुपरुन्धन्ति ते वै निरय-

गामिनः (१४) ॥ नियमान् पूर्वमादाय पश्चादजितेन्द्रियाः । अतिक्रामन्ति चाञ्चल्यात्ते वै निरयगामिनः (१६) ॥

**के स्वर्गगामिनः**

मुनिशार्दूलः स एव प्रसङ्गात्स्वर्गगामिनो लक्षयन्नाह—सत्येन तपसा क्षान्त्या दानेनाध्ययनेन च । ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः (२।९६।२१) ॥ मातापित्रोश्च शुश्रूषां ये कुर्वन्ति सदाहताः (२४) ॥ सर्वहिंसानिवृत्ताश्च साधुसङ्गाश्च ये नराः । सर्वस्यापि हिते युक्तास्ते नराः स्वर्गगामिनः (२५) ॥ शुश्रूषाभिस्तपोभिश्च गुरूणां मानदा नराः । प्रतिग्रहनिवृत्ता ये ते नराः स्वर्गगामिनः (२७) ॥ ये याचिताः प्रहृष्यन्ति प्रियं दत्त्वा वदन्ति च । त्यक्तदानफलेच्छाश्च ते नराः स्वर्गगामिनः (३२) ॥ ये परेषां श्रियं दृष्ट्वा न वितृप्यन्ति मत्सरात् । प्रहृष्टाश्चाति नन्दन्ति ते नराः स्वर्गगामिनः (३५) ॥ ये नराणां वचो वक्तुं न जानन्ति विप्रियम् । प्रियवाक्यैकविज्ञातास्ते नराः स्वर्गगामिनः (३७) ॥ असत्येष्वपि ये सत्याः ऋजवोऽनार्जवेष्वपि । रिपुष्वपि हिता ये च ते नराः स्वर्गगामिनः (४०) ॥ ये चापि भयसंत्रस्तान्ब्राह्मणांश्च तथा स्त्रियः । सार्थान्वा परिरक्षन्ति ते नराः स्वर्गगामिनः (४४) ॥ भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति । उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ (६।३३।३३) ॥

प्रकृते विषये पातालखण्डे षण्णवतितमेऽध्याये पुनः प्रक्रान्तम् । आवृत्तौ किं प्रयोजनमिति न विद्मः ।

**भारतस्य वर्षस्येयत्ता**

प्रागायता (हे) महाप्राज्ञाः षडेते रत्नपर्वताः । अवगाढा ह्युभयतः समुद्रौ पूर्वपश्चिमौ (३।३।२१) ॥ हिमवान् हेमकूटश्च निषधश्च नगोत्तमः । नीलश्च वैदूर्यमयः श्वेतश्च शशिसन्निभः (२२) ॥ सर्वधातुपिनद्धश्च शृङ्गवान्नाम पर्वतः । एते वै पर्वता विप्राः सिद्धचारणसेविताः (२३) ॥ तेषामन्तरविष्कम्भा योजनानि सहस्रशः ।... इदं तु भारतं वर्षम् (२५) ॥

**तीर्थफलभागिनः**

यस्य हस्तौ च पादौ च मनश्चैव सुसंयुतम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते (३।११।९) ॥ प्रतिग्रहादपावृत्तः संतुष्टो नियतः शुचिः । अहङ्कारनिवृत्तश्च स तीर्थफलमश्नुते (१०) ॥ अकल्किको निराकारोऽलध्वाहारो जितेन्द्रियः । वियुक्तः सर्वदोषैर्यः स तीर्थफलमश्नुते (११) ॥ आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते (१२) ॥

इदमिह चिन्त्यम्—यो हि प्रागेव संयतेन्द्रियोऽन्तः शुचिरनहङ्कृत आत्मारामो नित्यसन्तुष्टोऽदाम्भिकोऽकल्मषः स्वर्गाय राध्यत्यपवर्गाय वा, तेन तीर्थाटनेन किं नु प्राप्यम् । नेमाः पुराणकारोक्तयः क्षोदक्षमाः, रभसोक्तय इमाश्चिन्त्यप्रयोजनाः ।

**पञ्च ह्रदाः**

इह स्वर्गखण्डे षड्विंशेऽध्याये तीर्थमाहात्म्यप्रसङ्गेन पञ्चह्रदास्तीर्थ-

भूता उदाहृताः। क्षत्रमुत्साद्य रामेण भार्गवेण कुरुक्षेत्रे पञ्च ह्रदा रुधिरस्य पूर्णा निर्मिताः। तत्र तेन पितरस्तर्पिताः पितामहाः प्रपितामहाश्च। पितृभक्त्या प्रीतास्ते पितरस्तं वरेण च्छन्दयामासुः। भार्गवश्च प्रगृहीताञ्जलिरूचे—यदि मय्यनुग्राह्यताऽस्ति तर्ह्ययमेव वरो मे दीयताम्—क्षत्रोत्सादेन पापेन रोषवशात्कृतेन यन्मे क्षरितं तपस्तत्पुनराप्यायताम्, ह्रदाश्चेमे तीर्थायन्तां विश्वस्मिन्नस्मिन् विश्रूयन्तामिति। रुधिरपूर्णानां तेषां तीर्थत्वं कथं स्यात् कथं च तत्राप्लुप्तानां स्वर्गसौख्यं स्यादिति नेक्षितम्। अनघजनकदनकृतशोणितशोणा इमे गभीरास्तटाकाः स्पर्शमात्रेणापि दूषकाः स्युरिति तीर्थत्वप्रार्थना कथमुपपत्तिमती स्यादिति नेषदपि चिन्तितम्। मन्ये संरम्भकलुषितस्य भार्गवस्याद्याप्यस्वस्थं मनः।

### नित्यं स्नानम्

प्राणिनां जीवनं वारि प्राणा वारिणि संस्थिताः। नित्यं स्नानेन पूयन्ते येऽपि पातकिनो नराः। प्रातः स्नानं हरेद् वैश्य बाह्याभ्यन्तरजं मलम् (३।३१।५३-५४)॥ प्रातः स्नानेन निष्पापो नरो न निरयं व्रजेत्। स्नानं विना तु यो भुङ्क्ते मलाशी स सदा नरः (५५)॥

### पञ्च गुरवः

यो भावयति या सूते येन विद्योपदिश्यते। ज्येष्ठो भ्राता च भर्ता च पञ्चैते गुरवः स्मृताः (३।५१।३६-३७)॥

### अनभिवाद्यः क्षत्रियो ब्राह्मणेन

नाभिवाद्याश्च विप्रेण क्षत्रियाद्याः कथञ्चन। ज्ञान कर्मगुणोपेता यद्यप्येते बहुश्रुताः। ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः (३।५१।४९-५०)॥

### कः कस्मै पन्थानं दद्यात्

पन्था देयो ब्राह्मणाय स्त्रियै राज्ञे विचक्षणे। वृद्धाय भारभग्नाय रोगिणे दुर्बलाय च (३।५१।५४-५५)॥ मानवे धर्मशास्त्रे चक्री (=रथारूढः) स्नातकश्चेति द्वावतिरिक्तौ कीर्तितौ याभ्यां पूर्वं पन्था देयः। अत्र च वृद्धशब्देन मनूक्तो दशमीस्थो ग्राह्यः। राजस्नातकयो र्युगपत्समवेतयोः स्नातको मानमर्हतीति च मनौ विशेषः।

### विण्मूत्रविसर्गस्य प्रदेशविशेषे प्रतिषेधः

छायाकूपनदीगोष्ठचैत्याम्भःपथिभस्मसु। अग्नौ चैव श्मशाने च विण्मूत्रं न समाचरेत्। न गोमये न काष्ठे वा महावृक्षेऽत्र शाद्वले। न तिष्ठन्न च निर्वासा न च पर्वतमण्डले। न जीर्णदेवतायतने वल्मीके न कदाचन (३।५२।३९—)॥ न ससत्त्वेषु गर्तेषु न गच्छन्न समाचरेत्। तुषाङ्गार कपालेषु राजमार्गे तथैव च (४०)॥ न क्षेत्रे न बिले वापि न तीर्थे न चतुष्पथे। नोद्यानेऽपां समीपे वा नोषरे न पराशये (४१)॥ प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च (५४)॥

## ब्रह्मचारिणो धर्माः

एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः । आहूतोऽध्ययनं कुर्याद् वीक्षमाणो गुरो र्मुखम् (३।५३।१) ॥ नित्यमुद्यतपाणिः स्यात् साध्वाचारः सुसंयतः । आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः (२) ॥ नोचैः शय्यासनं चास्य सर्वदा गुरुसन्निधौ । गुरोस्तु चक्षु विषये न यथेष्टासनो भवेत् (४) ॥ नोदाहरेदस्य नाम परोक्षमपि केवलम् (=निरुपपदम्) । न चास्यानुकुर्वीत गतिभाषितचेष्टितम् (५) ॥ गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ६) ॥ न पादौ प्रसारयेदस्य संनिधाने कदाचन । जृम्भितं हसितं चैव कण्ठप्रावरणं तथा (११) ॥ लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा । आददीत यतो ज्ञानं तं न द्रुह्येत् कदाचन (२४) ॥ गुरुपत्नी तु युवती नाभिवाद्या तु पादयोः । कुर्वीत वन्दनं भूम्यामसावहमिति ब्रुवन् (३३) ॥ सृष्टिखण्डे चेदमधिकं पठ्यते—कर्मातिरेकेण गुरोरध्येतव्यं बुभूषुणा । … जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि (१।१५।२८७-८८) ॥

## वेदोपाकरणकालः

श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः । आषाढ्यां प्रोष्ठपद्यां वा वेदोपाकरणं स्मृतम् (३।४३।५६) ॥

## गृहस्थस्य धर्माः

वेदं वेदौ तथा वेदान् वेदाङ्गानि तथा द्विजः । अधीत्य चाधिगम्यार्थं ततः स्नायाद् द्विजोत्तमः (३।५४।१) न जीर्णमलवद्वासा भवेद् वै विभवे सति । न धर्मं ख्यापयेद् विद्वान् न पापं गूहयेदपि (१६) ॥ येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति (१९-२०) ॥ न राज्ञः प्रतिगृह्णीयान्न शूद्रात्पतितादपि (३।५५।३) ॥ शूद्रराज्ये च न वसेन्न पाखण्डजनै र्वृते (२१) ॥ न कुर्याद् बहुभिः सार्धं विरोधं बन्धुभिस्तथा । आत्मनः प्रतिकूलानि परेषां न समाचरेत् (३३) ॥ वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्जयेत् (३६) ॥ नेक्षेतोद्यन्तमादित्यं शशिनं वाऽनिमित्ततः । नास्तं यन्तं न वारिस्थं नोपसृष्टं न मध्यगम्(४३-४४) ॥ न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन (४५) ॥ नाश्नीयाद् भार्यया सार्धं नैनामीक्षेत चाश्नतीम् (४८) ॥ न हीनानुपसेवेत न च तृष्णामतिः क्वचित् । नात्मानं चावमन्येत दैन्यं यत्नेन वर्जयेत् (५४) ॥ न लौकिकैः स्तवैर्देवांस्तोषयेद् वाक्पतेरपि (६४) ॥ न वह्निं मुखनिःश्वासै ज्वलियेन्नाशुचि र्बुधः (८१) ॥ न भिन्द्यात्पूर्वसमयमभ्युपेतं कदाचन (८२) ॥ न वार्यपि प्रयच्छेत्तु नास्तिके हैतुकेपि च (३।५७।६८) ॥ अविद्वान् प्रतिगृह्णीयाद् भस्मी भवति काष्ठवत् (६९) ॥

## त्रिविधाः संन्यासिनः

ज्ञानसंन्यासिनः केचिद् वेदसंन्यासिनोऽपरे । कर्मसंन्यासिनस्त्वन्ये

त्रिविधाः परिकीर्तिताः (३।५९।५) ।। यः सर्वत्र विनिर्मुक्तो निर्द्वन्द्वश्चैव निर्भयः । प्रोच्यते ज्ञानसंन्यासी आत्मन्येव व्यवस्थितः (६) ।। वेदमेवाभ्यसेन्नित्यं निराशीर्निष्परिग्रहः । प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः (७) ।। यस्त्वग्निमात्मसात्कृत्वा ब्रह्मार्पणपरो द्विजः । ज्ञेयः स कर्मसंन्यासी महायज्ञपरायणः (८) ।। त्रयाणामपि चैतेषां ज्ञानी त्वभ्यधिको मतः । न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः (९) ।।

**यतिधर्माः**

जीर्णकौपीनवासाः स्यान्नग्नो वाऽध्यात्मतत्परः (३।५९।१०) ।। ब्रह्मचारी जिताहारो ग्रामादन्नं समाहरेत् । अध्यात्मरतिरासीन्निरपेक्षो निराशिषः (११) ।। आत्मनैव सहायेन सुखार्थं विचरेदिह । नाभिनन्देन्मरणं नाभिनन्देत जीवनम् (१२) ।। कालमेव प्रतीक्षेत निर्देशं भृतको यथा । नाध्येतव्यं न वक्तव्यं श्रोतव्यं न कदाचन (१३) ।। मुण्डी शिखी वाथ भवेत् त्रिदण्डी निष्परिग्रहः । काषायवासाः सततं ध्यानयोगपरायणः (१५) ।। ग्रामान्ते वृक्षमूले वा वसेद् देवालयेपि वा (१६) ।।

**भक्तेः फलम्**

अनायासेन मरणं विनायासेन जीवनम् । अनाराधितगोविन्दचरणस्य न जायते (३।६१। ९२-९३) ।। दुस्तरं च तरन्त्येव हरिभक्तितरिस्थिताः (३।६१।७५) ।।

**षड् जयन्त्यः**

जन्माष्टमी च नवमी चैत्रे मासे सिता शुभा । कृष्णा चतुर्दशी कुम्भे मेषे शुक्ला चतुर्दशी (४।४।६) ।। दुर्गाष्टम्याश्विने शुक्ला द्वादशी श्रवणान्विता । महापुण्याश्च शुभदा जयन्त्यः षट् प्रकीर्तिताः (४।४।७) ।। विष्णुभक्तिपरा नित्यं जयन्तीव्रतमानसाः । ते धन्यास्ते कुलीनास्त ईश्वरास्ते च पण्डिताः (४।४।४३) ।।

**अपुत्रत्वे हेतुः**

पूर्वजन्मनि यो मर्त्यो वर्तनं ब्राह्मणस्य च । हरेद्वा हारयेदत्र पुत्रहीनो भवेत् किल (४।५।७) ।। पूर्वजन्मनि या नारी परबालकघातनम् । करोति कपटेनैव बालहीना भवेद् ध्रुवम् (१०) ।। जले निमग्नं बालं यो दृष्ट्वा या न समुद्धरेत् । इह जन्मन्यपुत्रो वै साऽपुत्री च भवेद् ध्रुवम् (१३)।। पूर्वजन्मनि यो मर्त्यो निराशं चातिथिं द्विज । कुर्यात्क्रोधेन दण्डं च पुत्रहीनो भवेद् ध्रुवम् (१६) ।।

**मातृचरणशुश्रूषाशून्यस्य रामस्यानुतापः**

मातर्मया त्वच्चरणौ चिरकालं न सेवितौ । ततः क्षमस्वापराधं भाग्यहीनस्य मामकम् (५।४।३४) ।। किं कुर्वे जनकाज्ञातो गतो वै दण्डकं वनम् (३६) ।।

## रामराज्यम्

प्रजाः पुत्रानिव स्वीयाँलालयँल्लोकनायकः (५।५।२१) यस्मिञ्छासति लोकानां नाकालमरणं नृणाम् । न रोगादि पराभूति र्गृहेषु च महीयसी(२२)। नेतिः कदापि दृश्येत वैरिजं भयमेत्र च । वृक्षाः सदैव फलिनो मही भूयिष्ठ-धान्यका (२३) ।। पुत्रपौत्रपरीवारसनाथीकृतजीवनाः । कान्ता संयोगज-सुखै र्निरस्तविरहक्लमाः (२४) ।। नित्यं श्रीरघुनाथस्य पादपद्मकथो-त्सुकाः । कदापि परनिन्दासु वाचस्तेषां भवन्ति न (२५) ।। कारवोपि कदा पापं नाचरन्ति मनस्यहो । रघुनाथकराधातदुःखशङ्काभिशंसिनः (२६) ।। सीतापतिमुखालोकनिश्चलीभूतलोचनाः । सुपुष्पकृत्रिमोद्यानाः सुस्वादुफलपादपाः (२७) । सपद्मिनीककासारा यत्र राजन्ति भूमयः । सदम्भा[1] निम्नगा यत्र न यत्र जनता क्वचित् (३२) ।। कुलान्येव कुलीनानि[2] वर्णानां न धनानि च । विभ्रमो[3] यत्र नारीषु न विद्वत्सु च कर्हिचित् (३३) ।। नद्यः कुटिलगामिन्यो न यत्र विषये प्रजाः । तमो[4]युक्ताः क्षपा यत्र बहुले[5]षु न मानवाः । रजो[6]युक्ताः स्त्रियो यत्र न धर्मबहुला नराः (३५) ।। धनैरनन्धो[7] यत्रास्ति जनो नैव च भोजने । अनयः[8] स्यन्दनो यत्र न चैव राजपूरुषः (३६) ।। दण्ड[9]: परशुकुद्दालवालव्यजनरा-जिषु । आतपत्रेषु नान्यत्र क्वचित्क्रोधोपरोधजः (३७) ।। अन्यत्राक्षिक-वृन्देभ्यः क्वचिन्न परिदेवनम् । आक्षिका एव दृश्यन्ते यत्र पाशकपाणयः[10] (३८) ।। जाड्य[11] वार्ता जलेष्वेव स्त्रीमध्या[12] एव दुर्बलाः । कठोर-हृदया यत्र सीमन्तिन्यो न मानवाः (३९) ।। ओषधेष्वेव यत्रास्ति कुष्ठ-योगो[13] न मानवे । वेधो यत्र सुरत्नेषु शूलं मूर्तिकरेषु वै (४०) ।। कम्पः सात्त्विकभावोत्थो न भयात् क्वापि कस्य चित् । सञ्ज्वरः कामजो यत्र दारिद्र्यं कलुषस्य च । दुर्लभत्वं सदैवस्य सुकृते न च वस्तुनः (४१) ।। इभा एव प्रमत्ता वै युद्धे वीच्यो जलाशये । दानहानि[14] र्गजेष्वेव तीक्ष्णा एव हि कण्टकाः (४२) ।। बाणेषु गुणविश्लेषो बन्धोक्तिः पुस्तके दृढा । स्नेह-त्यागः खलेष्वेव न चैव स्वजने जने (४३)।।

अत्र पुराणकारोऽतिसुन्दर्या परिसङ्ख्ययाऽलङ्कृतया कथ्यं कथयन् कवि-कुञ्जरान्बाणादीनाह्वयत इव ।

## अश्वरक्षणे नियुक्ताय शत्रुघ्नाय रामस्यानुशासनम्

ये योद्धारः प्रतिरणगतास्ते त्वया वारणीयाः । वाहं रक्ष स्वक-गुणगणैः संयुतः सन्महोर्व्याम् (५।१०।५६) ।। सुप्तान् भ्रष्टान् विगत-

---

१. शोभनजलाः, दम्भयुक्ताः । २. कुलजानि, कौ पृथिव्यां लीनानि, निहितानि निखातानि । ३. विलासः, भ्रान्तिः । ४. अन्धकारः, तमोगुणः । ५. वहुलः कृष्ण-पक्ष । ६. रजः पुष्पमार्तवम्, रजोगुणः । ७. अनन्नः । ८. अविद्यमाननायकः, नीतिरहितः । ९. यष्टिः, निग्रहः । १०. अक्षः, बन्धनरज्जुः । ११. शैत्यम्, मौर्ख्यम् । १२. कटिः । १६. कुष्ठो रोगविशेषः, ओषधिविशेषश्च । १४. दानं मदस्रुतिः ।

वसनान्भीतभीतांस्तु नग्नान्। तान्मा हन्याः सुकृतकृतिनो ये नः शंसन्ति कर्म (५७)॥ विरथा भयसंत्रस्ता ये वदन्ति वयं तव। ते त्वया नहि हन्तव्या शत्रुघ्न सुकृतैषिणा (५८)॥

**भार्यया कान्तिमत्या भारतेः पुष्कलस्य समुद्धर्षणम्**

नाथ ते विजयो भूयात्सर्वत्र रणमण्डले। शत्रुघ्नाज्ञा प्रकर्तव्या हयरक्षा यथा भवेत् (५।१२।२)॥ स्मरणीया हि सर्वत्र सेविका त्वत्पदानुगा। कदापि मानसं नाथ त्वत्तो नान्यत्र गच्छति(३)॥ परमायोधने कान्त स्मर्तव्याऽहं न जातु चित्। सत्यां मयि तव स्वान्ते युद्धे विजयसंशयः (४)॥ पद्मनेत्र तथा कार्यमूर्मिलाद्या यथा मम। हास्यं नैव प्रकुर्वन्ति मां वीक्ष्य करताडनैः (५)॥ इयं पत्नी महाभीरोः सङ्ग्रामे प्रपलायितुः। कातरा यदि युध्यन्ति शूराणां समयः कुतः (६)॥ इत्येवं न हसन्त्युच्चैर्यथा मे देवराङ्गनाः। तथा कार्यं महाबाहो रामस्य हयरक्षणम् (७)॥ योद्धा त्वमादौ सर्वत्र परे ये तव पृष्ठतः। धनुष्टङ्कारबधिराः क्रियन्तां बलिनः परे (८)॥ तव प्रोद्यत्कराम्भोजकरवालभिया बलम्। परेषां भवतात् क्षिप्रमन्योन्यभयसङ्कुलम् (९)॥ कुलं महदलङ्कार्यं परान् विजयता त्वया। गच्छ स्वामिन्महाबाहो तव श्रेयो भवत्विह (१०)॥ इदं धनुर्गृहाणाशु महद् गुणविभूषितम्। यस्य गर्जितमाकर्ण्य वैरिवृन्दंभयातुरम् (११)॥ इमौ ते त्विषुधी वीर बध्यैतां शं यथा भवेत्। वैरिकोटिनिष्पेषबाणकोटिसुपूरितौ (१२)॥ कवचं त्विदमाधेहि शरीरे कामसुन्दरे। वज्रप्रभामहादीप्तिहतसन्तमसं दृढम् (१३)॥ शिरस्त्राणं निजोत्तंसे कुरु कान्त मनोहरम्। इमे वतंसे विशदे मणिरत्नविभूषिते (१४)॥

**च्यवनाश्रमवर्णनम्**

यत्र गावस्तु हरिणा (=सिंहेन) पाल्यन्ते पालनोचिताः। मूषका न खनन्त्यस्मिन्बिडालस्य भयाद् बिलम् (५।१४।१८)॥ मयूरैर्नकुलैः सार्धं क्रीडन्ति फणिनोऽनिशम्। गजैः सिंहैर्नित्यमत्र स्थीयते मित्रतां गतैः (१९)॥ एणास्तत्रत्य नीवारभक्षणेषु कृतादराः। न भयं कुर्वते कालाद्रक्षिता मुनिवृन्दकैः (२०)॥ गावः कुम्भसमोधस्का नन्दिनीसमविग्रहाः। कुर्वन्ति चरणोत्थेन रजसेलां पवित्रताम् (२१)॥

**तीर्थेषु वपनविधे हेतुमत्ता**

मनुष्याणां च पापानि तीर्थानि प्रतिगच्छताम्। केशानाश्रित्य तिष्ठन्ति तस्माद् वपनमाचरेत् (५।१९।२१)॥

**तीर्थे पादचारादिना गमने फलभेदः**

पादचारी गतिं कुर्यात्तीर्थं प्रति महोदयः (५।१९।२६)। यानेन गच्छन्पुरुषः समभागफलं लभेत्। उपानद्भ्यां चतुर्थांशं गोयानेन गोवधादिकम् (२७)॥ व्यवहर्ता तृतीयांशं सेवयाष्टमभागवान्। अनिच्छया व्रजंस्तत्र तीर्थमर्धफलं लभेत् (२८)॥

**सीताहरणकालः**

ततो (वनवासस्य त्रयोदशे वर्षे) माघासिताष्टम्यां मुहूर्ते वेदसंज्ञिते । राघवाभ्यां विना सीतां जहार दशकन्धरः (५।३६।२३-२४) ॥

**सुबाहुसुतेन चित्राङ्गेण समं युद्धे पुष्कलस्य प्रतिज्ञानम्**

बाणेनानेन चेत्त्वां वै न कुर्यां प्राणवर्जितम् । सतीं सन्दूष्य वनितां शीलाचारसुशोभिताम् (५।२७।३१)॥ यो लोकः प्राप्यते लोकैर्यमस्य वशवर्तिभिः । स लोको मम वै भूयात् सत्यं मम प्रतिश्रुतम् (३२) ॥ यदि रामाङ्घ्रियुगलं निष्कापट्येन चेतसा । उपासितं मया तर्हि मम वाक्यं भवत्वृतम् (४०) ॥ यदि स्वमहिलां भुक्त्वा नान्यां जानामि चेतसा । तेन सत्येन मे वाक्यं सत्यं भवतु सङ्गरे (४१) ॥

**रुक्माङ्गं प्रति पुष्कलस्य वचः**

संनिहितस्ते मृत्युरिति ध्वनयन्पुष्कलो वीरमणिसुतं रुक्माङ्गमाह—स्वर्गं प्राप्नुहि वीराग्र्य सर्वदेवैश्च सेवितम् (५।४१।२३) ॥ त्वादृशाः पृथिवीयोग्या न भवन्ति नृपोत्तमाः । शतक्रतुसमा योग्यास्तद् गच्छस्व सुरालयम् (२४) ॥

**पुष्कलस्य रामे भक्तिः**

हनूमान् पुष्कलं ज्ञापयति वृद्धो वीरमणी राजा शिवे दृढाभक्तिः शिवश्च स्वं लोकं विहाय तस्य पुरीमधिवसति तेन त्वया दुर्जयोसाविति तेन सम्प्रहारं परिहरेति । ततः पुष्कलः प्रत्यूचे—मच्चिन्तां मा स्म कृथाः । सविस्रम्भं चाह—शिवो भक्त्या वशीकृत्य स्वपुरे स्थापितोऽमुना । परमस्याशु हृदये न तिष्ठति महेश्वरः (४।४२।१७)॥ सदाशिवो यमाराध्य परमं स्थानमागतः । स रामो मन्मनस्त्यक्त्वा न क्वापि परिगच्छति (१८) ॥ यत्र रामस्तत्र विश्वं सर्वं स्थास्नु चरिष्णुः च । तस्मादहं जयिष्यामि रणे वीरमणिं नृपम् (१९) ॥

**भक्तवत्सलस्य रुद्रस्य भक्तार्थं रणोद्यमः**

वीरभद्रेण गणेन संस्थापिते पुष्कले शत्रुघ्नेन समं योद्धुं साक्षादुपतस्थे महेश्वरः । येन साक्षाद् मदपमानकृद् दक्षो न्यग्भावितो दैत्यपुरवास्तव्याश्च निषूदितास्तस्मै मे युद्धं देहीति शत्रुघ्नमाजुहुवे । भीषणं विक्रान्तवच्च तावेकादशाहं सम्प्रजह्राते । अन्ते शत्रुघ्नो मोहमापेदे विजिग्ये च देवदेवेशः (५।४३)॥ तदसहमान आञ्जनेयः परं प्रकुपितो रामभक्त्या बलवत् प्रयुक्तो जयिनापि तेन चिरं सङ्ग्रामयाञ्चक्रे, शिलया महत्या तस्य रथं ताडयामास तं च शकलानि चकार । विरथो हताश्वो हतसारथिश्च शिवो नन्दिपृष्ठमारुरोह । वह्निमालाज्वालामुद्वमन्तं त्रिशिखं त्रिशूलं हनूमति प्रचिक्षेप तच्च हस्तेनादाय वज्राङ्गो बभञ्ज तिलशः क्षणात् । ततो महादेवस्तरसा शक्तिं करेणादाय कपीन्द्रवक्षसि

प्रास, येन स वैक्लव्यमाप, सहसा च तद् व्यथामतीत्योल्बणं वृक्षं रुद्रोरसि प्रजहार, येन प्रहृतास्तत्रस्थाः फणीन्द्राः सन्त्रेसुरुज्जवाश्च पातालमुपेयुः। मुक्ते तस्मिन्नगे परं संरब्धः पिनाकी तस्मिन्मुसलं महाकायं पातयामास, मारुतिश्च तन्महता वेगेन वञ्चयामास। एवं शिलादिवर्षेण सम्पराये वर्तमाने पावनिर्नन्दिनं भीषयामास चन्द्रं च शकलीचकार। एवमत्यन्त-विह्वलः कोपनो महेशस्तद्वीर्येण परं परितोषं गतो वरेण तं छन्दयामास। वरं वृणुष्व, प्रीतो स्मि ते विक्रमेणेति (५।४४) ॥

## सुरथस्य रामदिदृक्षया हयनिग्रहः

हिमवत उपत्यकायां कुण्डलनाम्नि नगरे परमधार्मिको रामभक्तः सुरथो नाम भूपो बभूव। सप्त मासान् निरवग्रहं विचरन्हयो यदा तन्नग-रोपकण्ठमाससाद तदा राजसेवकास्तत्र तत्र पर्यटन्तस्तं मनोहरं तुरङ्ग-मं लक्षयित्वा राजानं निवेदयामासुरयं निगृह्यतामिति। ज्ञायतां कस्याय-मश्व इत्युक्तास्ते भाले पुरटपत्रं विलोक्य तदनुवाच्य तं ज्ञापयामासुर्महा-राजस्य त्रिभुवनचन्द्रस्य श्रीरामचन्द्रस्यायमश्वमेधीयो हय इति। इति विज्ञाय स परं प्रहर्षमाप हयं निग्रहीष्यामश्चेद्रामदर्शनं पुण्यतमं सुदुराप-माप्स्याम इति च मेने। ततः स्वभटान् व्यादिक्षद् गृह्यतां हय इति। शत्रु-घ्नश्च हयहरणं श्रुत्वा दशनैरोष्ठं सम्पिषन् सृक्किणी च लेलिहान उवाच केन वीरंमन्येन हृतो मेऽश्व आत्मनो वधमिच्छता। सुमतिं मन्त्रिणं च पप्रच्छ कस्येदं पुटभेदनमिति। स आह सुरथस्य परमधार्मिकस्येति। कथ-मत्र कर्तव्यम् इति मन्त्रिणा संमन्त्र्याङ्गदं दौत्येन सम्प्रैषयच्छत्रुघ्नः, इदं च समदिशत्, अर्पयाश्वं ज्ञानतोऽज्ञानतो वा हृतं नोचेच्छत्रुघ्ननिर्मुक्त-नाराचैः क्षतविग्रहः। पृथ्वीतलमलं कुर्वञ्शयिष्यसे विशीर्षक इति॥ इति दूतवाक्यमाकर्ण्य भूपतिराह—सत्यं ब्रूषे दूत, मया धृतोऽश्वः। नाहं शत्रुघ्नादिभयान्मोक्ष्ये, रामश्चेद् स्वयम् आगत्य दर्शनं मे दास्यते, तच्चरणौ नत्वा सुतसहितोऽश्वं दास्यामीति। क्षत्रियाणामयं धर्मो स्वामिनापि विरुध्यते धर्मेण युद्धमभीष्यते तत्रापि रामदर्शनमिच्छताऽभी-ष्यतेतराम्। भूयोपि विविधं भीषितः सुरथः स्वं निश्चयं न जहौ। दशभिः सुतैः समेतस्य तस्य पुष्कलादिभिस्तुमुलमायोधनं बभूव, महच्च कदनं सम्बभूव। सुरथसुतश्चम्पको हतः, महावीरः पवनसुतश्च बद्धः। तं बद्धं सुरथ आह—स्मर श्रीरघुनाथं त्वं दयालुं भक्तपालकम् (५।५३।१०)। यथा त्वां बन्धनात् सद्यो मोचयिष्यति सुष्ठुधीः। नान्यथाऽयुतवर्षेण मोच-यिष्यामि बन्धनात् (५।५३।११)। इत्थं प्रचोदितः पवनात्मजो रामेऽनन्य-मना भूयो भूयो भक्तवत्सलं भगवन्तं रामं मनसा जगाम बन्धनान्मां मोच-येति च विनीतवन्ममार्ग। एवं स्मृतो रामो विमानमारुह्य सपद्युपाजगाम बन्धनाच्च तं मुमोच॥ श्रीरामभद्रमायान्तं वीक्ष्यासौ सुरथः क्षणात्। नतयः (=नतीः) शतशश्चक्रे भक्तिपूर परिप्लुतः (५।५३।२२) ॥ इदमुत्तमं निदर्शनं भक्तेरहेतुकायाः संविदश्चाहार्यायाः, वाचां च स्थाने प्रयुक्ततायाः ॥

### लवेन हयस्य ग्रहः

गतः प्रातः क्रियां कर्तुं समिधस्तत्क्रियार्हकाः। आनेतुं जानकी सूनुर्वृतो मुनिसुतैर्लवः (५।५४।१)। ददर्श तत्र यज्ञाश्वं स्वर्णपत्रेण चिह्नितम्। कुङ्कुमागरुकस्तूरीदिव्यगन्धेन वासितम् (२)। विलोक्य जातकुतुको मुनिपुत्रानुवाच सः। अर्वा कस्य मनोवेगः प्राप्तो दैवान्ममाश्रमम्(३)।। आगच्छन्तु मया सार्धं प्रेक्षन्तां मा भयं कृथाः। इत्युक्त्वा लवस्तूर्णं वाहस्य निकटे गतः (४)।। गत्वा मुनिसुतैः सार्धं वाचयामास पत्रकम्। भालस्थितं स्पष्टवर्णराजिराजितमुत्तमम् (६)।। विवस्वतो महान् वंशः सर्वलोकेषु।। विश्रुतः (७)।। सूर्यवंशध्वजो धन्वी धनुर्दीक्षागुरुर्गुरुः।। यं देवाः सासुराः सर्वेनमन्ति मणिमौलिभिः (८)।। तस्यात्मजो वीरबलदर्पहारी रघूद्वहः।। रामचन्द्रो महाभागः सर्वशूरशिरोमणिः (९)।। करोति हयमेधं वै ब्राह्मणेन सुशिक्षितः। रावणाभिधविप्रेन्द्रवधपापापनुत्तये (११)।। मोचितस्तेन वाहानां मुख्योऽसौ याज्ञिको हयः। महाबलपरीवारो महाबलसुरक्षितः (१२)।। तद्रक्षकोऽस्ति तद्भ्राता शत्रुघ्नो लवणान्तकः। हस्त्यश्वरथपादातसङ्घसेनासमन्वितः (१३)। यस्य राज्ञ इति श्रेष्ठो मानो जायेत्स्वकान्मदात्। शूरा वयं धनुर्धारिश्रेष्ठा वयमिहोत्कटाः (१४)।। ते गृह्णन्तु बलाद् वाहं रत्नमालाविभूषितम् (१५)।। ततो मोचयिता भ्राता शत्रुघ्नो लीलया हठात्। शरासनविनिर्मुक्तवत्सदन्तकृतव्यथात् (१६)।। ये क्षत्रियाः क्षत्रियकन्यकायां जाताश्च सत्क्षेत्रकुलेषु सत्सु। गृह्णन्तु ते तद्विपरीतदेहा नमन्तु राज्यं रघवे निवेद्य (१७)।।

इति संवाच्य कुपितो लवः शत्रुधनुर्धरः। उवाच मुनिपुत्रांस्तान् रोषगद्गद्भाषितः (१८)। पश्यत क्षिप्रमेतस्य धृष्टत्वं क्षत्रियस्य वै। लिलेख यो भालपत्रे स्वप्रतापबलं नृपः (१९)।। को सौ रामः कः शत्रुघ्नः कीटाः स्वल्पबलाश्रिताः। क्षत्रियाणां कुले जाता एते, न वयमुत्तमाः (२०)।। इदानीं क्षत्रियत्वादि दर्शयिष्यामि सर्वतः। यदि क्षत्रियभूरेव भविष्यति च शत्रुहा (२२)।। ग्रहीष्यति मया बद्धं वाहं यज्ञक्रियोचितम्। नो चेत् क्षत्रियत्वमुन्मुच्य कुशस्य चरणार्चकः (२३)।। अधुना मद्धनुर्मुक्तैः शरैः सुप्तो भविष्यति। अन्ये ये च महावीरा रणमण्डलभूषणाः (२५)।।

### केनचित्पौरेण कान्तया सहालापे राममहिम्नो वर्णनम्

साक्षाद्राम इवासि ममेति कान्तयोक्तः कश्चित्कस्रो रामस्य च स्वस्य चान्तरं निदर्शयन्नाह—पतिव्रतानां तद्योग्यं स्वकान्तो राम एव हि (५।५५।३४)।। परं क्वाहं मन्दभाग्यः क्व रामो भाग्यवान् महान्। क्व चाहं कीटवतुच्छः क्व ब्रह्मादिसुरार्चितः(३५)।। खद्योतः क्व नु नभोरत्नं शलभः क्व नु पामरः। गजारिः क्व मृगेन्द्रो सौ शशकः क्व नु मन्दधीः [३६]।। क्व च सा जाह्नवी देवी क्व च रथ्याजनमुत्पथम्। क्व मेरुः सुरसंवासः क्व गुञ्जापुञ्जकोऽल्पकः [३७]।।

### रामाचारं विनिन्दन्त्यो रजकस्य गिरः

मामन्तरेण प्रजाः किं चिन्तयन्तीति निश्चेतुं रामः षडपसर्पान्प्रेरयति।

ते पृथक्त्वशः प्रजासु चरन्ति तत्र तत्र प्रवर्तमानान्विस्रम्भालापान् शृण्वन्ति । तेषु पञ्च तु सर्वत्र रामप्रशस्तिपराणि वाक्यानि निशाम्यन्ति प्रसीदन्ति च । षष्ठस्त्वेको रजकोक्तीराकर्णयन्दुःख्यति । रजकः कश्चिदेकरात्रं परगृहोषितां प्रत्यागतां भार्यामाक्रोशति पादघातं चाहन्ति । कर्कशं च निब्रवीति गच्छ त्वं मद्गृहात्तस्य गेहं यत्रोषितासि नक्तम्, नाहं गृह्णामि त्वां दुष्टां मद्वचनविलङ्घिनीम् (५।५५।६९) ॥ तदाऽस्य माता प्रोवाच मा त्यजेनां गृहागताम् । अपराधेन रहितां दुष्टकर्मविवर्जिताम् (७०) ॥ मातरं प्रत्युवाचायं रजकः क्रोधसयुतः । नाहं राम इव प्रेष्ठां गृह्णाम्यन्यगृहोषिताम् (७१) ॥ स राजा यत्करोत्येव तत्सर्वं नोतिमद् भवेत् । गृह्णामि नो भार्यां परवेश्मनि संस्थिताम् (७२) ॥ पुनः पुनरुवाचेदं नाहं रामो महीश्वरः । यः परस्य गृहे संस्थां जानकीं वै ररक्ष सः [७३] ॥

### रामस्य कीर्तिः प्रियतमा

वंशे वैवस्वते राजा न कश्चिदयशःक्षतः । मत्कीर्तिरद्य कलुषा गङ्गा यमुनया गता (५।५६।४३) ॥ लोकापवादात् त्यक्ष्येहं जानन्नपि विपापिनीम् (५।५८।३५) ॥ स्वयशः कारणेऽहं स्वं देहं त्यक्ष्याम्यशोभनम् । त्वामपि भ्रातरं त्यक्ष्ये लोकापवादाद् विगर्हितम् (३६) ॥ किमुतान्ये गृहाः पुत्रा मित्राणि वसु शोभनम् । स्वयशःकारणे सर्वं त्यजामि किमु मैथिलीम् (३७) ॥ न तथा मे प्रियो भ्राता न कलत्रं न बान्धवाः । यथा मे विमला कीर्ति र्वल्लभा लोकविश्रुता (३८) ॥

### दोहदपूर्तिमिषेण वनाय विसृष्टायाः सीतायाः प्रस्थाने दुर्निमित्तानि

लक्ष्मणं प्रतिगच्छन्ती देहल्यां चास्खलत्तदा (५।५८।५९) ॥ अविचार्य तदौत्सुक्याल्लक्ष्मणं प्रियकारिणमुवाच कुत्र स रथो येन मां प्रापयिष्यसि (६०) ॥ स निःश्वसन्रथं हैमं जानक्या सह निर्विशन् । सुमन्त्रं प्रत्युवाचासौ चालयाश्वान् मनोजवान् (६१) ॥ आहतास्तेन कशया वाहास्तस्यापतन्पथि (६३) ॥ स्वामिश्चलन्ति नो वाहा प्रयत्नेन परिचालिताः । किं करोमि न जानेऽत्र कारणं वाहपातने (६४) ॥ तदास्फुरद् दक्षनेत्रं जानक्या दुःखशंसकम् (६६) ॥ तदैव पक्षिणः पुण्याः कुर्वन्ति परिवर्तनम् (६७) ॥ तदा साशङ्का साऽऽह—रामे भूयाद्धि कल्याणं भरते वा तथानुजे । तत्प्रजासु च सर्वत्र मा भवन्तु विपर्ययाः (६९) ॥ सा गच्छन्ती मृगान् वामं परिवर्तनकारकान् । अपश्यद् दुःखसंघातकारकान् समभाषत (७१) ॥ अद्य यन्मे मृगा वामं वर्तयन्ति तदिष्यते । श्रीरामचरणौ मुक्त्वा गच्छन्त्या युक्तमेव तत् (७२)॥ महिलानां परो धर्मः स्वभर्तृचरणार्चनम् । तन्मुक्त्वाऽन्यत्र यान्त्या यद्भवेद्युक्तमेव तत् (७३) ॥

### पुष्कलेन लवाय स्वरथे निवेदिते लवस्योक्तिः

रथस्थेन पादचारिणा समं न योद्धव्यमिति साङ्ग्रामिकं नयं स्मरन्पुष्कलो लवाय रथं निवेदयति तत्र लवस्य क्षत्रियोचिता उदात्ता गिरः—





त्वया दत्ते रथे स्थित्वा युद्धं कुर्यामहं रणे । तदा मे पापमेव स्याज्जयः सन्दिग्ध एव हि (५।६१।२४)।। न वयं ब्राह्मणा वीर प्रतिग्रहपरायणाः । वयं तु क्षत्रिया नित्यं दानकर्मक्रियारताः (२५) ।। इदानीं त्वद्रथं कोपाद् भनज्मि प्रत्यहं भवान् । पादचारी भवत्येव पश्चाद्युद्धं करिष्यति (२६) ।।

## लवकृतं शत्रुघ्नसैन्यनिबर्हणम्

सेनान्यां कालजिति लवेन निहते सति शत्रुघ्नसैन्यास्तं परिवव्रुर्महच्च जन्यमजनि । तदित्थं वर्णयति कविः पुराणकारः—लवस्तान् स्वशराघातैः पलायनपरान्व्यधात् । (५।६०।४८) ।। छिन्ना भिन्नाङ्गकाः केचिद् गताः केचिद्रणाङ्गनात् । संनिवार्याखिलान् योधान् विजगाह चमूं मुदा (४९) ।। वराह इव निःश्वस्य प्रलये सुमहार्णवम् । गजा भिन्ना द्विधा जाता मौक्तिकैः पूरिता मही (५०)।। पतितास्तत्र दृश्यन्ते वीरा रणविशारदाः । सुस्राव शोणितसरिद्धयमस्तककच्छपा (५४) ।। महाप्रवाहलसिता वैरिणां भयकारिका । केषां चिद् बाहवश्छिन्नाः केषां पादा विकर्तिताः (५५) ।।

## कुशस्य शत्रुघ्नसंमुखे स्थितस्य प्रतिश्रवः

त्रिभिः शरैश्चेत्त्वां न पातयामि—यो मनुष्यवपुः प्राप्य दुर्लभं पुण्यकोटिभिः । तन्नाद्रियेत संमोहात् तस्य मेऽस्त्वत्र पातकम् (५।६३।६९) ।।

## जिताहवौ कुशलवौ प्रति पतिदेवतायाः सीताया उदारं वचनं तयोश्च नीतिमत् प्रतिवचनम्

युवाभ्यामनयः सृष्टो हृतो रामहयो महान् (५।६४।६७) ।। अनेके पातिता वीरा इमौ बद्धौ कपीश्वरौ । पितुस्तव हयो वीरौ यागार्थं मोचितोऽमुना (६८) ।। तस्यापि हृतवन्तौ किं वाजिनं मखसत्तमे । मुञ्चतं प्लगावेतौ मुञ्चतं वाजिनां वरम् (६९) ।। क्षाम्यतां (=क्षम्यतां) भूपते भ्राता शत्रुघ्नः परमकोपनः । जनन्यास्तद्वचः श्रुत्वा ऊचतुस्तां बलान्वितौ (७०) ।। क्षात्रधर्मेण तं भूपं जितवन्तौ बलान्वितम् । नास्माकमनयो भावी क्षात्रधर्मेण युध्यताम् (७१) ।। वाल्मीकिना पुरा प्रोक्तमस्माकं पठतां पुरः । दुष्यन्तेन समं युद्धं भरतेन कृतं पुरा (७२) ।। कण्वस्याश्रमे वाहं धृत्वा यागक्रियोचितम् । तस्मात् सुतः स्वपित्रापि युध्येद् भ्रात्रापि चानुजः (७३) ।। गुरुणा शिष्य एवापि तस्मान्नो पापसम्भवः । त्वदाज्ञातोऽधुना चावां दास्यावो हयमुत्तमम् (७४) ।।

## अदृष्टमहिमा

अदृष्टमेव कार्येषु सर्वशोप्यनुगच्छति । ईशनीयाः कुतो नैतदन्वीयुः सुखदुःखयोः (५।६६।८०) ।: धनुर्भङ्गे मतिभ्रंशे कैकेय्या, मरणे पितुः । अरण्यगमने तत्र हरणे तव, वारिधेः (८१) ।। तरणे, रक्षसां भर्तुर्मारणेपि रणे रणे । सहायीभवने मह्यमृक्षवानररक्षसाम् (८२) ।। लाभे तव,

प्रतिज्ञाया: सत्यत्वे च सतीमणे (=सीते)। पुन: स्वबन्धुसम्बन्धे राज्यप्राप्तौ च भामिनि (८३)॥ पुन: प्रियावियोगे च कारणं यदवारणम्। प्रसीदति तदेवाद्य संयोगे पुनरावयो: (८४) ॥ इति वाल्मीक्याश्रमसंस्थायै सीतायै तद्दर्शनकामो रामो लक्ष्मणं सन्दिशति ।

### वासुदेवस्य सविशेषं प्रियाः

रुक्मिणी सत्यभामा च नाग्नजिती सुलक्षणा (५।७०।३२) ॥ मित्रविन्दाऽनुविन्दा सुनन्दा जाम्बवती प्रिया। सुशीला चाष्टमहिला वासुदेवप्रियास्ततः (३३)।।

### मथुरामाहात्म्यम्

अहो न जानन्ति नरा दुराशया: पुरीं मदीयां परमां सनातनीम्। सुरेन्द्रनागेन्द्रमुनीन्द्रसंस्तुतां मनोरमां तां मथुरां पुरातनीम् (५।७३।४३)॥ काश्यादयो यद्यपि सन्ति पुर्यस्तासां तु मध्ये मथुरैव धन्या। यज्जन्ममौञ्जीव्रतमृत्युदाहै र्नृणां चतुर्धा विदधाति मुक्तिम् (४४) ॥ यदा विशुद्धास्तप आदिना जना: शुभाशया ध्यानधना निरन्तरम्। तदैव पश्यन्ति ममोत्तमां पुरीं न चान्यथा कल्पशतैर्द्विजोत्तमा: (४५) ॥

### तुलसीमाहात्म्यम्

या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुः पावनी, रोगाणामभिवन्दिता निरसनी सिक्तान्तकत्रासिनी। प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता, न्यस्ता तच्चरणेविमुक्तिफलदा तस्यै तुलस्यै नमः (५।७८। ६८) ।।

### नैत्यकं चरितं हरेः

नारदेन पृष्टा वृन्दा नैत्यकं हरेश्चरितमित्थमाह—मध्ये वृन्दावने रम्ये पञ्चाशत्कुञ्जमण्डिते। कल्पवृक्षनिकुञ्जे तु दिव्यरत्नमये गृहे (५।८३।१९)॥ निद्रितौ तिष्ठतस्तल्पे निबिडालिङ्गितौ मिथ:। (राधाकृष्णौ) मदाज्ञाकारिभि: पश्चात्पक्षिभि र्बोधितावपि(२०)॥ गाढालिङ्गनजानन्दमाप्तौ तद्भङ्गकातरौ। न मन: कुरुतस्तल्पात्समुत्थातुं मनागपि (२१) ॥ ततश्च सारिकासङ्घै: शुकाद्यै: परितो मुहुः। बोधितौ विविधैर्वाक्यै: स्वतल्पादुदतिष्ठताम् (२२) ॥ गच्छत: स्वस्वभवनं भीत्युत्कण्ठाकुलौ तत: (२४) ॥ कृत्वा कृष्णो दन्तकाष्ठं बलदेवसमन्वित: (२५) ॥ मात्रानुमोदितो याति गोशालां सखिभिर्वृत: (२६) ॥...· दुग्ध्वा गा: काश्चिद् दोहयित्वा जनै: परा:। आगच्छति पितुर्वाक्यात्स्वं गृहं सखिभिर्वृत: (३५) ॥ अभ्यङ्ग मर्दनं कृत्वा दासै: संस्नापितो मुदा। धौतवस्त्रधर: स्रग्वी चन्दनाक्तकलेवर: (३६) ॥ मुहुराकारितो मात्रा प्रविशेद् भोजनालयम्। अवलम्ब्य करं सख्युर्बलदेवसमन्वित: (३९) ॥ भुङ्क्ते विविधान्नानि भ्रात्रा च सखिभिर्वृत:। हासयन् विविधैर्हास्यै: सखींस्तैर्हसति स्वयम् (४०) ॥ इत्थं भुक्त्वा तथाचम्य दिव्य-

खट्वोपरि क्षणम् । विश्रम्य सेवकं दत्तं ताम्बूलं विभजेन्नदन् (४१)।। गोपवेषधरः कृष्णो धेनुवृन्दपुरः सरः ।···पितरं नत्वा···वनं व्रजेत् (४२-४३) ।। वनं प्रविश्य सखिभिः क्रोडयित्वा क्षणं ततः । विहारैं विविधैस्तत्र वने क्रीडते मुदा (४४)।। वञ्चयित्वा ततः सर्वान् द्वित्रैः सखिभि वृ तः । सङ्केतकं व्रजेद्धर्षात् प्रियासन्दर्शनोत्सुकः (४५) ।। सापि कृष्णं वनं यातं दृष्ट्वा स्वगृहमागता । सूर्यादिपूजाव्याजेन कुसुमाहृतये तथा (४६) ।। वञ्चयित्वा गुरून्याति प्रियसङ्गेच्छया वनम् । इत्थं तौ बहुयत्नेन मिलित्वा कानने ततः (४७)।। विहारैर्विविधैस्तत्र दिनं विक्रीडतो मुदा । दोलायां समारूढौ सखिभिर्दोलितौ क्वचित्(४८)।। क्वापि वेणु करस्रस्तं प्रिययापह्नुतं (=प्रच्छन्नं) हरिः । अन्वेषयन्नुपालब्धो विप्रलब्धप्रियागणैः (४६) ।। हसितैं र्बहुधा ताभिर्हासितस्तत्र तिष्ठति । वसन्तवायुना जुष्टं वनखण्डं मुदा क्वचित् (५०) ।। प्रविश्य चन्दनाम्भोभिः कुङ्कुमादिजलैरपि निषिञ्चत्तो यन्त्रमुक्तैस्तत्पङ्के लिम्पतो मिथः (५१) ।। उपविश्यासने दिव्ये मधुपानं प्रचक्रतुः । ततो मधुमदोन्मत्तौ निद्रया मीलितेक्षणौ (५७) ।। मिथः पाणी समालम्ब्य कामबाणवशंगतौ । रिरंसू विशतः कुञ्जं स्खलद्वाङ्मनसौ पथि (५५)।। सख्यो पि मधुभिर्मत्ता निद्रया पीडितेक्षणाः (५६) ।। अभितो मञ्जुकञ्जेषु सर्वा एव शिश्यिरे । पृथगेकेन वपुषा कृष्णो पि युगपद्विभुः (५७) ।। सर्वासां सन्निधिं गच्छेत् प्रियया प्रेरितो मुहुः (५८) ।।.... पणीकृत्य मिथो हारचुम्बनाश्लेषपरिच्छदान् (७१) ।। अक्षैर्विक्रीडतः प्रेम्णा नर्मालापपुरः सरम् (७२) ।। सङ्गम्य सखीन्कृष्णो गृहीत्वा गाः समन्ततः । आगच्छति व्रजं हर्षान्नादयन्मुरलीं मुने (८२) ।। सभागृहं व्रजेत् तैश्च जुष्टं वन्दिजनादिभिः (६४) ।।

### ईश्वरस्वरूपम्

उपनिषत्सु यदृषिदृष्टमीश्वरस्वरूपं स्थितं तच्छायानुकारीह तदुपन्यस्तं शब्दतोऽर्थतश्च साधारणम् इति तदत्र संगृह्यते प्रणतजनप्रमदाय—योगयुक्ता महात्मानः परमार्थपरायणाः । यं न पश्यन्ति मुग्धास्तु सर्वज्ञं सर्वदर्शकम् (५।८४।८७) ।। हस्तपादविहीनस्तु सर्वत्र परिगच्छति । सर्वं गृह्णाति त्रैलोक्यं स्थावरं जङ्गमं पुनः (८८) ।। नासामुखविहीनस्तु घ्राति भक्षति भूपते । अकर्णः शृणुते सर्वं सर्वसाक्षी जगत्पतिः (८६) ।। अरूपो रूपसम्बद्धः पञ्चवर्गवशंगतः । सर्वलोकस्य यः प्राणः पूज्यते स चराचरैः (६०)।। अजिह्वो वदते सर्वं वेदशास्त्रानुगं तथा । अत्वचः स्पर्शमेवापि सर्वेषामेव विन्दति (६१) ।

### मानस्यादिर्नानारूपा भक्तिः

विविधा भक्तिरुद्दिष्टा मनोवाक्कायसम्भवा (५।८५।४) ।। लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा । ध्यानधारणया बुद्ध्या वेदानां स्मरणं हि यत् (५) ।। विष्णुप्रीतिकरी चैषा मानसी भक्तिरुच्यते । मन्त्रवेदसमुच्चारैरविश्रान्तविचिन्तनैः (६) ।। जाप्यैश्चारण्यकैश्चैव वचिकी भक्तिरुच्यते ।

व्रतोपवासनियमैः पञ्चेन्द्रियजयेन च (७) ॥ कायिकी सर्वानिर्दिष्टा भक्तिः सर्वार्थसाधनी । भूषणै र्हेमरत्नाङ्कैश्चित्राभिर्वाग्भिरेव च (८) ॥ वासः प्रतिसरैः सूत्रैः पावकव्यजनोच्छ्रितैः । नृत्यवादित्रगीतैश्च सर्वबल्युपहारकैः (९) ॥ भक्ष्यभोज्यान्नपानैश्च या पूजा क्रियते नरैः । नारायणं समुद्दिश्य भक्तिः सा लौकिकी मता (१०) ॥ ऋग्यजुः सामजात्यानि संहिताऽध्ययनानि च । क्रियन्ते विष्णुमुद्दिश्य वैदिकी भक्तिरुच्यते (११-१२) ॥

### वैशाखमाहात्म्यम्

यथोमा सवनरीणां तपतां भास्करो यथा । आरोग्यलाभो लाभानां द्विपदां ब्राह्मणो यथा (५।८२।६४)॥ परोपकारः पुण्यानां विद्यानां निगमो यथा । मन्त्राणां प्रणवो यद्वद् ध्यानानामात्मचिन्तनम् (६५) ॥ सत्यं स्वधर्मवर्तित्वं तपसां च यथा वरम् ॥ शौचानामर्थशौचं च दानानामभयं यथा (६६) ॥ गुणानां यथा लाभक्षयो मुख्यो गुणः स्मृतः । मासानां प्रवरो मासस्तथाऽसौ माधवो मतः (६७) ॥ यथा न वारिधिसमो लोके कोपि जलाशयः । तथा मासो न वैशाखसदृशो माधवप्रियः (५।८६।१९) ॥

### सूक्ष्मा धर्मगतिः

धर्मस्य गतयः सूक्ष्मा दुर्ज्ञेया ह्यीश्वरैरपि । मुह्यन्ते चात्र विद्वांसः...... (५।८७।४) ॥ विश्वामित्रादयो राजन्धर्मा धिक्येन बाहुजाः । ब्राह्मण्यं समुपायाताः सूक्ष्मा धर्मगतिस्ततः (५) ॥ अजामिलोपि भूपाल दासीपतिरिति श्रुतः । धर्मपत्नीपरित्यागो नित्यं पापपथे स्थितः (६) ॥ म्रियमाणः सुतस्नेहात्प्रोच्य नारायनेति च । तद्व्याजनामग्रहणात्पदं लेभे सुदुर्लभम् (७)॥ अनिच्छयापि दहति स्पृष्टो हुतवहो यथा । तथा दहति गोविन्दनाम व्याजादपीरितम् (८)॥ कानीनस्य मुनेः पौत्रा भ्रातृजायाभिगामिनः । गोलकस्य च वै पाण्डोः पुण्डाः कुण्डाः स्वयं तथा (९) ॥ ते पञ्चापि भूपाल पाण्डवा द्रौपदीरताः । तेषां च पुण्यश्लोकत्वं सूक्ष्मा धर्मगतिस्ततः (१०) ॥ विचित्राणि च भूतानि विचित्राः कर्मशक्तयः (११) ॥ कदाचित्सुकृतं कर्म कूटस्थं यदवस्थितम् । केन चित्कर्मणा भूयः शुभेन परिवर्धते (१२) ॥ फलं ददाति सुमहत् कस्मिन्नपि च जन्मनि । सूक्ष्मो धर्मोऽतिगहनो मीयते न यथा तथा (१३) ॥ नैतस्य फलदानस्य श्रूयते भूप निश्चयः । यत्किञ्चित्सुकृतं कर्म च्छन्नं पापान्तरैरपि (१४) ॥ तदागत्य कुतः क्वापि स्वं फलं च प्रयच्छति । कृतस्य नेह नाशोऽस्ति पुण्यस्य दुरितस्य च (१५) ॥

### सतां शीलम्

पवित्रयन्ति जननीमवनीमपि ते नराः । परतापच्छिदो ये तु चन्दना इव चन्दनम् (५।१०१।३५) ॥ परोपकृतये ये तु पीड्यन्ते कृतिनो हि ते । सन्तस्त एव ये लोके परदुःखविदारणाः (३६) ॥ आर्तानामार्तिनाशार्थं प्राणा येषां तृणोपमाः । तैरियं धार्यते भूमिर्नरैः परहितोद्यतैः (३७) ॥ मनसो यत्सुखं नित्यं तत्स्वर्गो नरकोपमः । तस्मात्परसुखेनैव सुखिनः

साधवः सदा (३८) ॥ वरं निरयपातोऽत्र वरं प्राणवियोजनम्। न पुनः क्षणमार्तानामार्तिनाशमृते सुखम् (३९) ॥ ऐश्वर्यस्याभिजात्यस्य गुणानां सुकृतस्य च। सन्तः फलं हि गण्यन्ते (गणयन्ति) यद्गीतपरिरक्षणम् (५। १०२।२) ॥

### अष्टादशोपपुराणानि

आद्यं सनत्कुमाराख्यं नारसिंहमतः परम्। तृतीयमाण्डमुद्दिष्टं दौर्वाससमथैव च (५।११५।९४) ॥ नारदीयं तथान्यच्च कापिलं मानवं तथा। तद्वदौशनसं प्रोक्तं ब्रह्माण्डं च तथा परम् (९५) ॥ वारुणं कालिकाह्वानं माहेशं साम्बमेव च। सौरं पाराशरं चैव मारीचं भार्गवाह्वयम् (९६) ॥ कौमारं च पुराणानि कीर्तितान्यष्ट वै दश ॥ अष्टादशपुराणानां व्याकर्ता तु भवेन्मनुः (९७) ॥

### सुखदुःखसमाहारः संसारः
### (युधिष्ठिरनारदसंवादः)

तमुवाच ऋषिर्दुःखं त्यज त्वं पाण्डुनन्दन। सुखदुःखसमाहारे संसारे कः सुखी नरः (६।३।३) ॥ ईश्वरोपि न स्थायी पीड्यते देहसंचयैः (अवतारेषु नानाविग्रह परिग्रहात्)। न दुःखरहितः कश्चिद् देही दुःखसहो यथा (४) ॥ शरीरं सवितुर्यस्माद्राहुस्तद् ग्रसते बली ॥ राहोरपि शिरश्छिन्नं शौरिणामृतभोजने (५) ॥ सोपि शार्ङ्गधरो देवः क्षिप्तः सागरगह्वरे। जालन्धरेण वीरेण निहतः सोपि शम्भुना (६) ॥

### जालन्धरनाम्नः पुरस्य वर्णनम्

गङ्गासागरसङ्गमेन जालन्धरस्य वीरस्योत्पत्तिराख्यायते। मन्निवासोचितं मे स्थानं देहीति स जातमात्रस्तातं सागरं प्रार्थयामास। इत्थं प्रार्थितः स पुत्रप्रणयेन ततोऽपससर्प जले च स्थलं दर्शयाम्बभूव। सोऽयं देशो योजनशतं विस्तीर्णः शतत्रयं चायतो बभूव। जालन्धरनाम्नैव च तं प्रथयामास। ततोस्मिन्पीठे दैत्यवर्येण मयेन नगरं निर्मापयामास जालन्धरम्। तदित्थमुपवर्णयति कविः पुराणकारः—प्राकारगोपुरद्वारं सोपानगृहभूमिकम् (६।४।१९) ॥ यत्रेन्द्रनीलसम्बद्धप्रासादतलसंस्थिताः। मेनिरे जलदोद्योगं ताण्डवस्थाः शिखण्डिनः (२०) ॥ यत्र प्रवालमाणिक्यभवनोत्था मरीचयः। सेव्यन्ते शकुनैश्चूतरुचिराङ्कुरशङ्कया (२१) ॥ यत्र काञ्चनहर्म्येषु त्विषो वह्निषु कातराः। विलोक्य प्रपलायन्ते दावशङ्काः शिखण्डिनः (२२) ॥ यत्र स्फटिकशालोत्थप्रभासंमिश्रिता दिशः। विभान्ति मन्दरोद्भ्रान्ताः सफेनार्णवसन्निभाः (२३) ॥ यत्र वातायानोद्धूतधूपधूमस्य लेखया। नभो बभूव तद्गङ्गाकालिन्दीसङ्गमोपमम्। (२७) ॥ यत्रानेकगृहोद्भूतप्रभया सकलं नभः। विभातीन्द्रायुधाकीर्णः शरन्मेघ इवोन्नतः (२८) ॥ यत्रानिशं भ्रमभ्रान्ताः सूर्यवाहाः प्रपीडिताः। विश्रामं यान्ति मध्याह्ने प्रासादशिरसि स्थिताः (२९) ॥

**जालन्धरेण क्षीरोदधिमन्थनकारणज्ञानाय शक्रं प्रति राहोर्दूतस्य सम्प्रेषणं तयोरुक्तिप्रत्युक्ती च**

राहुमुखेन जालन्धरस्य वचनम्—पितृव्यो मम दुग्धाब्धिस्त्वया कस्माद् विलोडितः। मन्दराद्रिविधानेन हृतः कोशो महाधनः (६।५।१४) ॥ श्रीचन्द्रामृतनागांश्च तन्मणिं विद्रुमादिकम्। देहि सर्वं तथा स्वर्गं शीघ्रं त्यज पुरन्दर (१५) ॥ किं केकीव शिखण्डमण्डिततनुः सारीव किं सुस्वरः, किं वा हन्त शकुन्तबालकपितुः कर्णामृतस्यन्दनः। किं वा हंस इवाङ्गनागतिगुरुः किं कीरवत् पाठकः, काकः केन गुणेन काञ्चनमयेऽलङ्कारितः पञ्जरे (१६) ॥ स त्वं मद्वचनात्तूर्णं कुरु सर्वं यथोचितम्। तं क्षमापय भूपालं यदि जीवितुमिच्छसि (१७) ॥ शृणु दूत समासेन सिन्धोर्मथनकारणम्। पुरा हिमवतः सूनुर्मैनाको नाम मे रिपुः (१८) ॥ स कुक्षौ विधृतस्तेन सागरेण जडेन च। दग्धं चराचरं येन वह्निना हयरूपिणा (२०) ॥ स चापि विधृतस्तेन सागरेण दुरात्मना। धर्मद्विषां दानवानामसौ वा आश्रयः प्रभुः (२१) ॥ नित्यं दधि घृतं क्षीरं दानवेभ्यः प्रयच्छति। अत एवायमस्माभिर्दुर्वारेण विलोडितः (२२) ॥

**जालन्धरस्य राज्यमपरः स्वर्गः**

समुद्रतनये राज्यं भुवो राजन्प्रशासति। न कश्चिन्म्रियते मर्त्यो नरकं कोपि न व्रजेत् (६।६।१८) ॥ न कलिः प्रणयादन्यो न भोगादपरः क्षयः। न बन्ध्या दुर्भगा नारी नालङ्कारविवर्जिता (१६) ॥ कुरूपा दुर्गता दुष्टाऽयशस्या न च दृश्यते। न तत्र विधवा नारी न कश्चिन्निर्धनो जनः (२०) ॥ दातारः सन्ति सर्वत्र न प्रतिग्राहिणः क्वचित्। पुण्या जनाः प्रयच्छन्ति द्विजेभ्यो ह्यात्मनो धनम् (२१) ॥ रूपयौवनशालिन्यः सीमन्तिन्यो गृहे गृहे। गोक्षीरं दधि सर्पिश्च यत्र निर्जरसो जनाः (२२) ॥ मङ्गलं तत्र सर्वेषां न क्वचिद् वधबन्धनम्। मरणं न च हिंसास्ति न कश्चित् केन बाध्यते (२३) ॥ ऋणं न दृश्यते राजन् धनिनः सन्ति सर्वतः। सन्तुष्टाः सर्वसस्याढ्याः प्रजाः सर्वत्र पार्थिव (२४) ॥ केलीक्षुदण्डप्रभवश्च दुग्धरसोतिस्वादुतरो गृहे नृणाम्। शुश्राव नारीनरयो हितं वचो न चापहर्ताऽध्वनि गच्छतां सदा (२५) ॥ पतन्त्यखण्डा नभसो यतस्ततो धाराश्च कर्मारविमिश्र सर्पिषः। संमिश्रिताः शर्करया परिश्रिताः समुद्रसूनोः स्मरणान्मुखे नृणाम् (२६) ॥

**शूलिनो गेहे किं रत्नजातमस्ति यदर्थं तेन युध्येतेति जालन्धरस्य नारदे प्रश्नः, तत्प्रत्तं तदुत्तरं च**

किमस्ति शूलिनो गेहे रत्नजातं महामुने। तन्ममाचक्ष्व सकलं नास्ति युद्धं निरामिषम् (६।११।२) ॥ भूति गात्रे वृषो जीर्णः फणिनोङ्गे विषं गले। भिक्षापात्रं करे, पुत्रौ गजाननषडाननौ (३) ॥ इत्यादि विभवस्तस्य यदन्यत् तन्निबोध मे। तनया गिरिराजस्य विशाला ह्युन्नतस्तनी

(४) ।। दग्धस्मरोपि भगवान् यस्य रूपेण मोहितः। महेशो यद्विनोदाय कुरुते नित्यकौतुकम् (५) ।।

**राहो दूतस्य शम्भवे जालन्धरसन्देशः**

ईश्वरोऽसि कथं लोके भिक्षाभोजी प्रतिष्ठितः। संगोपयसि योगीन्द्र गौरीं रम्यां प्रयच्छ मे (६।११।४७) ।। स्कन्दलम्बोदराभ्यां त्वं पुत्राभ्यां सहितोऽधुना। भिक्षापात्रं गृहीत्वा तु भ्रम नित्यं गृहे गृहे (४८) ।।

**जालन्धर नाम्नोऽन्वर्थता**

इहैवोत्तरखण्डे षण्णवतितमे ऽध्याये जालन्धरस्योपाख्यानं पुनरुक्तम्। किञ्चिदतिरिक्तं चोक्तम्। जातमात्रस्य बालस्य निनादेन स्वर्गश्च सत्यलोकश्च बधिरीकृतौ। तच्छ्रुत्वा शतधृतिः स्वयं तत्रोपेयाय बालं च समुद्रोत्सङ्गे निशामयामास। समुद्रश्च तं प्रार्थयामास जातकर्मादिः संस्कारोऽस्य क्रियतामिति। एवं वदति पितरि समुद्रजो ब्रह्माणं कूर्चे जग्राह। कूर्चं धुन्वतोऽस्य नेत्राभ्यां जलं सुस्राव, तज्जलं सं बालो नेत्राभ्यां विदधारेति ब्रह्मोक्तेन जालन्धर इति नाम्ना प्रथामाप।

**कैलासस्य रामणीयकम्**

दिव्यकेसरमन्दाररजःपुञ्जपरिश्रिताः । शीताम्बुशीकरासारैः प्रभुग्ना वान्ति वायवः (६।१२।३२) ।। यत्र सिद्धाङ्गनापीनस्तनोत्तुङ्गतरङ्गिणः। मन्दारमकरन्दाढ्याः सुन्दरा वान्ति वायवः (३३)। प्राप्नुवन्ति सुराः प्रीतिं स्वबिम्बालोकहर्षिताः (३५) ।। यत्र चन्दनकस्तूरीगन्धोन्मत्तालिसंचयाः। विभान्ति दग्धकन्दर्पनिवार्णाङ्गारसन्निभाः (३७) ।। यत्राङ्गनानां सकलं विलोक्य सौरभ्यमत्युत्तमकान्तिमित्रम्। मन्ये परित्यक्तमनोविनोदा कस्तूरिका गाहति कालिमानम् (३८) ।। क्वचित्प्रवरगैरिकासमसमुल्लतत्पङ्कजं लवङ्गदलसन्निभासनचलच्चकोरं क्वचित्। क्वचिदिगरिसरित्तटोतरणिवत् स्फुरत्कुण्डलं चलन्निचुलमञ्जरीविनयनप्रभृङ्गं क्वचित् (३९) ।। क्वचिद् दलितकोकिलाकुलितनूतनचूताङ्कुरं कुरङ्गकुलसेवितं प्रबलशालिमूलं क्वचित्। क्वचित्प्रवरसुन्दरैः सुरवधूपदैः पावनं वनं नयति विक्रियामिह मनो मुनीनामपि (४०) ।।

**यत्र देशकालयो वर्ज्या रतिः**

महाविषादे पतिते भये च कृते समाधौ वमने महाज्वरे। श्राद्धे प्रयाणे गुरुवृद्धसन्निधौ रतिं बुधाः शङ्कर वर्जयन्ति (६।१४।४३) ।।

**काशीमाहात्म्यम्**

किं सत्तीर्थमसेवि किं द्विजकुलं पूजादिभिः सत्कृतम्। येन प्रापि सदाशिवस्य शिवदा सा राजधानी स्वयम् (६।२३।३७) ।। किं भीत्या दुरितव्रजात् किमु मुदा पुण्यैरगण्यैः कृतैः, किं विद्याभ्यसनान्मदेन जडतादोषाद् विषादेन किम्। किं गर्वेण धनोदयादधनतातापेन किं भोजनैः, स्नात्वा श्रीमणिकर्णिकापयसि चेद् विश्वेश्वरो दृश्यते (४१) ।।

### तुलस्या गुणगरिमा

यत्र यत्र गृहे ग्रामे वने वा तुलसी भवेत् (६।२५।२६) ॥ गृहे तस्मिन्न दारिद्र्यं नायोगो बन्धुसम्भवः (अयोगः=वियोगः) । न दुःखं न भयं रोगस्तुलसी यत्र तिष्ठति (३०) ॥ तुलसीगन्धमाघ्राय यत्र गच्छति मारुतः (३३) ॥ दिशो दश च ताः पूता भूतग्रामश्चतुर्विधः । यस्मिन्गृहे मुनिश्रेष्ठ तुलसीमूलमृत्तिका (३४) ॥ सर्वदा तत्र तिष्ठन्ति देवताश्च शिवो हरिः (३५) ॥

### वृक्षरोपी नरकं न याति

अतीतानागतौ चोभौ पितृवंशौ महामुने (६।२८।१३) ॥ तारयेद् वृक्षरोपी च तस्माद् वृक्षांस्तु रोपयेत् । पुत्रपौत्रा भवन्त्येते पादपा नात्र संशयः (१४) ॥ पुष्पैः सुरगणान्सर्वान् पत्रैश्चापि तथा पितॄन् । छायया चातिथीन्सर्वान्पूजयन्ति महीरुहान् (१५-१६) । दशकूपसमा वापी दशवापीसमो ह्रदः । दशह्रदसमा कन्या दशकन्यासमो द्रुमः (१।४४।४५५) ।

### नीलवृषस्य लक्षणम्

लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते । नीलपाण्डुर लाङ्गूलः (६।३३।२२-२३) ॥

### ब्रह्मस्वहरणे महती विनष्टिः

ब्रह्मस्वे नो रतिं कुर्यात् प्राणैः कण्ठगतैरपि । अग्निदग्धाः प्ररोहन्ति ब्रह्मदग्धो न रोहति (६।३३।४२) । ब्रह्मस्वेन च पुष्टानि अङ्गानि च मुहुर्मुहुः । कार्यकाले विशीर्यन्ते सिकताभित्तयो यथा (४४) ॥ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते (४५) ॥ विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् । लोहचूर्णं चाश्मचूर्णं विषं संजरयेन्नरः (४६) ॥ ब्रह्मस्वं त्रिषु लोकेषु कः पुमाञ्जरयिष्यति (४७) ॥

### जागरस्य नवधात्वम्

…जागरं नवधा मतम् । सशास्त्रं जागरं यच्च नृत्यगान्धर्वसंयुतम् (६।:८।५४) ॥ सवाद्यं तालसंयुक्तं सदीपं मधुभिर्युतम् । उच्चारैस्तु समायुक्तं यथोक्तैर्भक्तिभावितैः (५५) ॥ प्रसन्नं तुष्टिजननं संमूढं लोकरञ्जनम् । गुणैर्द्वादशभिर्युक्तं जागरं माधवप्रियम् (५६) ॥

### गोदावरीस्थस्य प्रतिष्ठानस्य वर्णनम्

यत्र गोदावरीतीरशीकरैरवशीतलैः । हंसाः पत्रपुटैः कीर्णे हरन्ति यमिनां श्रमम् (६।१८०।३) ॥ स्फुरत्पद्मावलीकोशपरागसुरभीकृतम् । श्लाघ्यं गोदावरीतोयं येन ते निर्जरा जनाः (४) ॥ धिक् सुधामोषधीशस्य विकृत्क्षयविधायिनीम् । महाराष्ट्रवधूकानां मज्जन्तीनां मुनीश्वराः (५) ॥ स्पृशन्ति यत्र वक्त्राणि फुल्लपङ्कजशङ्कया । यत्र खेलन्महाराष्ट्राः क्वणत्कङ्कणसुन्दराः (६) ॥ हरन्ति ध्वनयोऽलीनां मनांस्यपि तपस्विनाम् । अत्युच्चसौधशिखरविहारि वनितामुखम् (७) ॥ पश्यन्-





नुदिनं यत्र क्षीयते मृगलाञ्छनः । अत्युच्च-सौधवलभीमहामणिमरीचिभिः (८) ॥ चुम्ब्यन्ते मुनिगन्धर्वैं दूर्वाचन्दनचञ्चलैः । यस्मिन्नाधूयमानानां पताकानां समीरणैः (९) ॥ गतश्रमा रवेर्याने भवन्ति रथवाजिनः । राशीकृतैर्मलयजैरसंख्यातैर्वणिग्गणैः (१०) यस्मिन्नुपलशेषोऽसौ लक्ष्यते मलयाचलः । पुञ्जीकृतानि दृश्यन्ते यत्र मुक्ताफलान्यपि (११) ॥ नगरीदेवताहास्यस्तबका इव सर्वतः (१२) ॥ नित्यमध्वरधूमेन श्यामला कल्पशाखिनः । असाधारणदातृत्वं पश्यन्त इव लज्जया (१४) ॥ स्वल्पमात्रमपि क्वापि न पदं प्रापुरीतयः । नीतयः प्रसरन्ति स्म यस्मिन् (ज्ञानश्रुतौ राज्ञि) शासति मेदिनीम् (१७) ॥ वापीकूपतडागानां छद्मना योऽनुवासरम् । हृदयस्थानीव मेदिन्या निधानानि व्यलोकयत् (१८) ॥

### काश्मीरनगरसुषमा

यत्राभ्रंलिहगेहानां पङ्क्तयः शङ्खपाण्डुराः । ता जाता धूर्जटेः स्पष्टा अट्टहासदशा इव (६।१८०।६९) ॥ यत्र काश्मीरमाश्रित्य नित्यं वसति भारती । नो चेद् युगपदेवेदं कथं लिखति वाङ्मयम् (७२) ॥ विश्रामन्त्याः सरस्वत्याश्चिरं यत्र मदालसाः । मृणालचञ्चवो हंसा वाहनानि चरन्त्यमी (७३) ॥ कलाविशेषं प्रहिता यत्र बोद्धुं विरिञ्चिना । तारा इव विराजन्ते हंसा याताः समन्ततः (७४) ॥ उपन्यासै द्विजातीनां यत्र न श्रूयते स्फुटम् । मूकोपि निर्जरो वाचा पदकल्लोलडम्बरः (७६) ॥ जन्माभ्यासवशादेव पठन्ति बटवः स्वयम् । यत्रोपाध्यायसान्निध्यमाश्रित्य सकलाः कलाः (७९) ॥ यत्र ब्राह्मणपत्नीनां कपोलफलकं मुहुः । स्पृशन्समीरणो वाति मन्दं शापभयादिव (८१) ॥

### भक्तिः

इह वयं भक्तिमधिकृत्य बह्वधस्तादवोचाम । पौराणिकानां भक्तिः प्रधानमिति भक्तिं पुनर्रूपयति पुराणकारोऽवितृप्यन्निव—येषां चित्ते भवेद् भक्तिः सर्वदा प्रेमरूपिणी (६।१९४।१६) ॥ ते न पश्यन्ति कीनाशं स्वप्ने प्यमलमूर्त्तयः । न प्रेतो न पिशाचो वा राक्षसो वाऽसुरोऽपि च (१७) ॥ भक्तियुक्तमनस्कानां स्पर्शने दर्शने प्रभुः (१८) ॥ हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः (१९) ॥ दुर्वासा दुःखमापन्नः पुरा भक्तिविनिन्दकः । अलं वृत्तैरलं तीर्थैरलं योगैरलं मखैः (२१) ॥ अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा (२२) ॥

### शुकेन परीक्षिते भागवतश्रावणस्य कालः

श्रीकृष्णनिर्गमात् त्रिंशद्वर्षाविधिगते कलौ । भाद्रशुक्लनवम्यां वै कथारम्भं शुकोऽकरोत् (६।१९८।७०) ॥

### नारायणशब्दनिरुक्तिः

नारा इत्यात्मनां सङ्घास्तेषां गतिरसौ पुमान् (६।२२६।५०) ॥ त एव

चायनं तस्य तस्मान्नारायणः स्मृतः। सर्वं हि चिदचिद्वस्तु श्रूयते दृश्यते जगत् (५१)॥ योऽसौ व्याप्य स्थितो नित्यं स वै नारायणः स्मृतः (५२)॥ नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः (५३)॥ तान्येव चायनं तस्य तेन नारायणः स्मृतः (५४)॥

**तामसा ऋषयः**

काणादं गौतमं शक्तिमुपमन्युं च जैमिनिम् (६।२३५।२६)॥ कपिलं चैव दुर्वासं मृकण्डुं च बृहस्पतिम्। भार्गवं जामदग्न्यं च दशैतांस्तामसानृषीन् (विदुः) (२७)॥

**तामसानि पुराणानि**

मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च। आग्नेयं च षडेतानि तामसानि निबोध मे (६।२३६।१८)॥

**उमायाः कृष्णे पारदार्यशङ्का, शङ्करकृतः समाधिश्च**

पार्वतो शशङ्के—धर्मसंरक्षणार्थाय जगत्यामवतीर्य सः। परदाराभिगमनं कथं कुर्याज्जनार्दनः (६।२४५।१७६) शङ्करः समादधे—स्वशरीरे परेष्वङ्ग भेदो नास्ति शुभानने। सर्वं जगच्च तस्याङ्गं पृथगत्र न विद्यते (१७५)॥ स्त्रीपुंभेदो न वै तस्य पुरुषस्य महात्मनः। नैसर्गिकस्य भर्तृत्वादात्मेशत्वाज्जगत्पतेः (१७६)॥ तथापहृतपाप्मत्वसामर्थ्याद् व्यापिनः प्रभोः। दोषोऽत्र नास्ति सुभगे देवस्य परमात्मनः (१७७)॥

**विष्णोर्धाम**

अत्र षष्ठे खण्डेऽष्टाविंशत्युत्तरद्विशततमेऽध्याये शिवायै समुत्सुकायै शिवेन विष्णोर्धाम मितैरक्षरै ऋक्छायाश्रयेण वर्णितम्। तत्र कीदृशो वाग्योगः, कियच्च शब्दतोऽर्थतश्च साम्यमिति कुतूहलि स्याच्चेतः सचेतसामिति स सन्दर्भो यथातथमिहोद्ध्रियते टिप्पणैश्च विमर्शपरैरभिसम्बध्यते—हरेः पदं वर्णयितुं न शक्यं मया च धात्रा च मुनीन्द्रसङ्घैः। यस्य पदे ह्यच्युत ईश्वरो यः सो अङ्ग वेद यदि वा न वेद (६०) (ऋ० १०।१२९।७)॥ यदक्षरं वेदगुह्यं यस्मिन्देवा अधि विश्वे निषेदुः (ऋ० १।१६४।३९)। यस्तन्न वेद किमृचा करिष्यति ये तद्विदुस्त इमे समासते (ऋ० १।१६४।३९) (६७)॥ तद्विष्णोः परमं धाम सदा पश्यन्ति सूरयः। अक्षरं शाश्वतं दिव्यं देवि (=पार्वति) चक्षुरिवाततम् (ऋ० १।२२।२०) (६८)॥ विष्णोः पदे हि परमे पदे तत्सशुभाह्वयैः। यत्र गावो भूरि शृङ्गा (ऋ० १।१५४।६) आसते सुसुखाः प्रजाः (७१)॥ आदित्यवर्णं तमसः परस्ताज् (वा० सं० ३१।१८), ज्योतिरच्युतम् (७३)॥ यतः स्वसारो युवती भूलीले विष्णु वल्लभे। अत्र पूर्वे ये च साध्या विश्वे देवाः सनातनाः (७५)॥ ते ह नाकं महिमानः सचन्ते (ऋ० १।१६४।५०) शुभदर्शनाः। तत्र विज्ञानिनो विप्रा जागृवांसः समिन्धते (ऋ० १।२२।२१) (७६)॥ यत्नर्निवर्त्या समस्याश्लोकपूर्तिरेषा भात्यनुकार्यार्थसम्बन्धविनिर्मुक्ता। नारदीये पुराणे जैमिनेरुपज्ञा यो वेदपादस्तवः स्थितस्तस्य षोडशीमपि कलां नार्हतीयं

वाचोयुक्तिः । ते व ऋक्पादाः स्वार्थं परित्याजिताः प्रकृतेषु पद्येषु हठात् प्रक्षिप्ता इवानङ्गभूता अनन्विताः किञ्चिदुद्वेगाय भवन्ति । बह्वत्र चिन्त्यम् । यस्य पदे ह्यच्युत ईश्वरो य इत्यादौ पद्ये यस्येत्यनेन प्रकृतो वर्ण्यो हरिरेव परामृश्यते । अच्युतो हरिरेव । तेन हरेः पदे हरिरित्युक्तिर्न सङ्गता भवति । ऋचि तु इयं विसृष्टिर्यत आबभूव सोऽस्या अध्यक्षो पीमां वेद न वा वेदेति विशयः । विसृष्टिश्च कर्मेति व्यक्तमुदितम् । इह पुराणे तु हरिरसौ किं वेद न वा वेदेत्याकाङ्क्षा न पूर्यते । तेन नेदं साध्वनुकरणम् । ऋचो अक्षरे परमे व्योमन् इत्यस्य स्थाने पुराणे यदक्षरं वेदगुह्यमिति पठितम्, तेन किमृचा करिष्यतीत्यनेनान्वयो विघटितः । गाव इत्यनेन रश्मय उच्यन्त इति यास्कः, तेन सुसुखाः प्रजा इत्यनेनान्वयदुर्घटता व्यक्ता । तत्र विज्ञानिनो विप्रा जागृवांसः समिन्धते इति पुराणपाठे तत्रेत्यस्थाने । ऋचि यदिति श्रूयते । युज्यते तत्, इन्धेः सकर्मकत्वस्य प्रसिद्धेः, क्वचिद् दैवादिकत्वस्य परिग्रह एवाकर्मकत्वात् । ञिइन्धी दीप्ताविःयर्थनिर्देशस्तु भ्रमकः । आदित्यवर्णमित्यादेर्याजुषस्य मन्त्रस्य विष्णुधामवर्णनेऽनुपकारित्वं विस्पष्टम् । तत्र वेदाहमेतं पुरुषं महान्तमित्युपक्रमान्महान् पुरुषो लिलक्षयिषितो न तु विष्णोः परमपूरुषस्य पदं धाम ।

### इन्द्रकृतो विष्णुस्तवः

अन्यत्रापि (६।२४५।१८९-२०६) इह ऋगंशगुम्फनेनेन्द्र उपश्लोकयत्युपेन्द्रम् । तद् द्रष्टव्यम् । दाशतय्यां हिरण्यगर्भइत्यादि प्राजापत्यं सूक्तमाम्नायते दशर्चम् । तस्येत्यमनुकरोति पुराणकारः—अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्तत । त्वमेवैकः पतिरसि पुरुषस्त्वं हिरण्मयः (१८९) ।। पृथिवीं द्यामिमां देव धृतवानसि नित्यदा । आत्मदः फलदो यश्च स्यादेवं जगदीश्वरः(१९०)।। अवाप्तं तच्च त्रिदशैः प्रकाशं जगतां पतेः । अमृतं चैव मृत्युश्च छाया तव सनातन (१९१) ।। तस्मै देवाय भवते विधेम हविषा वयम् । हेमवन्त इमे यस्य समुद्भूता हिरण्मयाः (१९२) ।। समुद्रा रसना यस्य वाहुस्तस्यैव केशव । इमा दिशः प्रतिदिशो वायुर्यस्य तवाव्यय (१९३) ।। तस्मै देवाय भवते विधेम हविषा वयम् । येन त्वया समारूढा पृथिवी वर्धता पुनः(१९४)।। स्वर्लोकः स्तम्भितो येन त्वया ब्रह्मन्महेश्वर । त्वमन्तरिक्षे रजसो वसानः सर्वगोऽव्ययः (१९५) ।। तस्मै देवाय भवते विधेम हविषा वयम् । यं क्रन्दसी राजमने तप्तभासे गुणान्विते (१९६) ।। अभ्यैक्षेतां च मनसा अवश्यं श्रीश्च सर्वदा । यत्रास्ते सूर उदितो विभाति परमे पदे (१९७) ।। तस्मै देवाय भवते विधेम हविषा वयम् । यदापो बृहती विश्वब्रह्ममायं जनार्दनाः (१९८) गर्भं दधाने सर्गेऽत्रजनयन्ती रघौघकृते । समवर्तत देवानामसुरेकोऽव्ययो विभुः (१९९) ।। तस्मै देवाय भवते विधेम हविषा वयम् । या आपो महिना दक्षं पर्यपश्यत्प्रजापतिम् (२००) ।। यज्ञं दधानास्तत्रादौ जनयन्ती हविः पुमान् । यो देवेष्वेक एवासीदधिदेवः परात् परः (२०१) ।। तस्मै देवाय भवते विधेम हविषा वयम् । मा नो हिंसीज्जनिता यः पृथिव्या अव्ययः पुमान् (२०२) ।।

यो दिवं सत्यधर्मा जजानाव्यय ईश्वरः। यश्चन्द्रो बृहतीरापो जजान सकलं जगत् (२०३) ॥ तस्मै देवाय भवते विधेम हविषा वयम्। एतानि विश्वजातानि बभूव परिता प्रति (२०५) ॥त्रयाणां पतयः स्याम तव कारुण्यवोक्षणात्। हिरण्मयाख्यः पुरुषो हिरण्यश्मश्रुकेशवान् (२०६) ॥ तद्वै देवस्य सवितु र्वरेण्यं भग उत्तमम्। सदा धीमहि ते रूपं धियो यो नः प्रभाति हि (२०८) ॥

अत्रानुकार्यानुकरणयो र्महान् विसंवादः। प्रतिपद्यमर्थानन्वयः। सोऽयमपपाठनिबन्धनः प्रायेण, क्वचिदभिसन्धिकृतोऽज्ञानकृतोऽपि वा। प्रथमे पद्ये समवर्ततेति हिरण्यगर्भे कर्तरि युक्तः प्रथमपुरुष ऋचि। अत्र तु युष्मदुपपदे न युक्तः। द्वितीये ऋक्स्थं 'बलदा' इत्युपेक्ष्य फलद इति धृतम्। तत्कस्मात्। चतुर्थे हेमवन्त इत्यनर्थको न्यासः, हिरण्मया इत्यनेनैव गतार्थत्वात्। ऋचि तु हिमवन्त इति पाठः स्थितः। पञ्चमे दिशः प्रतिदिशो वायुरित्युक्तम्। तत्र वायुरिति जघन्यः पाठः। दिशां प्रतिदिशां तेनारादपि साम्याभावात्। ऋचितु 'बाहू' इति सुतरां समीचीनः। षष्ठे येन (त्वया) समारूढा पृथिवीति पठ्यते। येन द्यौरुग्रा पृथिवी च दृढा इति ऋग्वर्णः। पृथिव्या विष्णुना समारोहणं तु न क्वचिदन्यत्र श्रूयते। सप्तमे स्वर्लोकः स्तभितो येनेत्युक्तम्। ऋचि तु लोकद्वयोपन्यासः स्वश्च नाकश्च। तदिदमन्तरमन्तर्धापितं पुराणकारेण। अष्टमेऽन्तरिक्षे रजसो वसान इत्यास्थितम्। रजसो विमान इत्याम्नायस्थपाठस्त्वनवबोधाग्निराकृतः। नवमे (मनसा) रेजमने इत्यृक्पदार्थमनवगत्य 'राजमाने' इति पाठोऽङ्गीकृतः। तदिदमज्ञानविजृम्भणम्। एकादशे यदापो बृहती विश्वब्रह्ममायम् इतिस्फुटं पाठभ्रंशः। ऋचि विश्वमायन् इत्यवदातः श्लिष्टार्थकः पाठः। द्वादशे जनयन्तीरित्यस्य कर्म नोक्तम्। ऋचि तु जनयन्तीरग्निम् इति सर्वथा सङ्गतं वचः। गर्भं दधाना इत्यृक्पाठः, स च निर्दुष्टः। त्रयोदशे सर्वमाकुलं न किमप्यनाकुलम्। यश्चिदाप इत्यृचि। यइति प्रजापतिं प्रत्यवमृशति। आप इति कर्मणि द्वितीया। वेदेऽनभ्यन्तरः पुराणकारो दक्षशब्देन पुराणप्रसिद्धं प्रजापतिमभिप्रैति। य आप इति पठित्वा प्रथमान्तं च तदभिमत्य पर्यपश्यदित्येकवचनान्तायाः क्रियाया अनौचित्यं न पश्यति। ऋषि त्वप उद्दिश्य दक्षं दधाना इत्युक्तम्। यश्चन्द्रो बृहतीरप इत्यप्यपपाठः। आपश्चन्द्रा इत्यृग्वर्णः। चन्द्रा आह्लादिकाः। चन्द्र इत्येकवचनान्तोऽपपाठो लेखकप्रमादजः। अन्त्ये एतानि विश्वजातानि बभूव परिता प्रति इत्यपार्थकं पदकदम्बकम्। लिपिकरप्रमाद एवायम्। त्रयाणां पतयः स्यामेत्यपि पूर्वेण समोऽपार्थकः पदसंनिपातः। ऋचि तु वयं स्याम पतयो रयीणामित्यर्थवान् प्रसन्नः पदचयः॥

## रामनामशतकम्

इह पुराणेऽष्टोत्तरं रामनामशतकं स्थितम् (६।२५४।३०-४७)। विष्णुनामसहस्रमपीह। तच्च सर्वस्य विदितमिति तत्र विषये वचनं नापे-

क्ष्यते। रामनामशतके तु जायते विवक्षा। तेषु बहूनि तद्विक्रमसामर्थ्यादिनिबन्धनानि, अल्पानि तु तच्छीलप्रतिबद्धानि। तानि यथा—जितेन्द्रियः शरण्यः, ब्रह्मण्यः, स्मितवक्त्रः, मितभाषी, पूर्वभाषी,सुन्दरः, महोदार इत्यादीनि।

### धनप्रशंसा

धनाद्धर्मः प्रभवति धनाच्च विपुलं यशः। धनात्कुलमवाप्नोति भवेत् किं वा धनादृते (७।४।२५)॥ धनहीनं जनं दृष्ट्वा सखापि वा पलायते। मेघः शरद्यम्बुहीनः खण्डं खण्डं नयेन्महत् (२६)॥ खादितुं प्राप्यते यावत्तावदेव हि बान्धवाः। धनं यस्य कुलं तस्य बुद्धिर्यस्य निवर्तते (२८)॥ ज्ञेयः स मूर्खः सुतरामधिकस्याधिकं फलम् (२९)॥

### अतिथिपूजा

गृहिणां परमो धर्मः प्रोक्तश्चातिथिपूजनम् (७।२५।२६)। वहन्त्यतिथिपूजायां दक्षतां गृहिणो यदि। तदा प्रयोजनं तेषां किमन्यैः पुण्यकर्मभिः (१३)॥ यस्य न श्रूयते नाम न च गोत्रं न च स्थितिः। अकस्माद् गृहमागच्छेत्सोऽतिथिः प्रोच्यते बुधैः (३१)॥ ब्राह्मणाः क्षत्रिया वापि वैश्या वा वृषलास्तथा। गृहागता हि पूज्या हि विष्णुवत् तत्त्वदर्शिभिः (३२)॥

अपवृक्तं पुराणप्रतिपाद्यपरीक्षणम्। कालोऽयं शब्दतोऽपीदं पुराणं लेशतः परिच्छेत्तुम्। सन्त्यत्र हृद्या उपमोत्प्रेक्षाः, सन्ति च हृदयङ्गमाः शतशः सूक्तयः, याः सान्निध्यमात्रेण काव्यशरीरं मण्डयन्ति चिन्तिताश्च रसिकजनचेतो हरन्ति। अनुप्रासोपि क्वाचित्कः प्रकृतिमधुरो वमतीव कर्णयो र्मधुधाराम्। इतीदं कृत्स्नमुदाहरणैः समर्थयिष्यामः। दूषणान्यपि कानिचिद् विजृम्भन्ते वाग्विषयाण्यृतिङ्कराणि। न वयमभिप्रेमः शाब्दिकान्दुन्वन्तोऽपप्रयोगा वाचं दूषयन्तः स्थिता इति। ते यथा पुराणान्तरेषु तथेहापीति न तान् गणयामः। लिङ्व्यत्ययादयो नानोल्बणा व्यतिक्रमाः प्रचुराः प्रबन्धं दूषयन्तः श्रवणशूलायन्ते। तांस्तावदनुक्रमेण निदर्शयिष्यामः। मधुरेण समापयेदिति परस्तादुपमाद्यलङ्करणानि सुभाषितानि च।

### लिङ्गव्यत्ययः

भोजयित्वोपकरणांस्तेभ्यो दत्त्वा विसर्जयेत् (१।५५।६)। उपकरण नपुंसकं न पुमान्। ग्रहणे वाऽधुना चास्य अलोभं नष्टमेव मे (१।५५।३२)। यथा लोभः पुमांस्तथा नञ्तत्पुरुषोऽलोभोपि। काममभावेऽव्ययीभावे नपुंसकत्वं निर्दिष्टम्। तस्य तस्य भवन्त्येव मित्राः सर्वत्र भामिनि (२।७।६)। मित्रशब्दः सूर्यवचन एव पुमान्नान्यत्र। बलहीनाथ दीनापि व्यापिता वलिना तदा (२।८।५६)। वलिः स्त्री। अन्येन क्रियते क्लेशमन्येनापि प्रभुज्यते (२।१२।१११)॥ घञन्तः क्लेशः पुमान्। पालितं लोभमेवैकं त्यक्त्वा धर्मं सदैव हि (२।१७।४२)। सुखेन स्थीयतामत्र गृहोऽयं तव सुव्रत (२।१८।१८)। एकवचनान्तस्य गृहशब्दस्य पुंस्त्वं मर्मस्पृगिव भवति

यस्माद् भया: प्रवर्तन्ते (२।१६।१६) । भयं नियमेन नपुंसकम् । तस्यैव तेजसा दग्धा भस्मतां यान्ति किल्बिषा: (२।३६।५१) । पापं किल्बिष कल्मषमित्यमर: क्लीबे पठति । कपिलादो महाराज सर्वसौख्यान् प्रभुञ्जति (२।४०।१५) । स्वार्थंष्यञन्तं सौख्यं क्लीबम् । कन्दमूलान् सुभक्षन्ति निर्भयास्तव तेजसा (२।४२।३६) । इन्द्रियाणां बलं वर्गं जितं येन महात्मना (२।४६।३६)। वर्ग: पुमान् । ओषध्यो मन्त्रदेवाश्च निमित्ता: स्युर्न संशय: (२।५१।२१) । निमित्तं नपुंसकम् । तद्वच्च वायुभक्षं तु कृतं तेन महात्मना (२।६१।२८) । भक्ष: पुमान् । उपकाररता: पुण्या धन्यास्ते कीर्तिभाजना: (२।७४।१६) । भाजनमित्यजहल्लिङ्गं नपुंसकम् । दैव: प्रभुर्हि भूतानां सुखदु:खोपपादने (२।८१।६०) । दैवं भागधेयं नपुंसकम् । ब्रह्महत्यादिका: पापा: प्रलयं यान्ति नान्यथा (२।८६।५७) । पापमंहो भवति । अर्श आदित्वादच्येव पुमान् अहंस्वीत्यर्थश्चेत् । भिक्षार्थं तस्य भागानि प्रकुर्वन्ति च भूपते (२।६५।२८) । भाग: पुंसि नियत: । सर्वान्दोषान्परित्यज्य संयम्य विषयेन्द्रियान् (२।१२४।१४) । इन्द्रियस्य पुंसि प्रयोगोऽत्याहितमिव । विलम्बे बहुविघ्नं स्यात् (४।२६।२४)।। अत्रर्थे के विघ्नशब्दो नियतं पुमान् । तदा शप्तोऽतिदु:खार्तो जग्राहाङ्घ्रिचाशुशुक्षणि: (५।१४।४१) । अङ्घ्रि: पुमान् । चरणस्तु क्वचिन्नपुंसकमपि । अब्दानि त्रीणि सलिले (५।१२।६६) । अब्द: पुमान् सर्वस्य विदित: । सृष्टिस्थित्यादिना युक्तास्तिष्ठन्ति यस्य वैभवा: (५।६६।११२) । भावेऽणि वैभवं नपुंसकम् । जागरं नवधा मतम् (६।३८।५४) । भावे घञि पुंसि जागर: । जागतरकारो वेति अकारे कृत्प्रत्यये टापि जागरेति स्त्रियामपि । आरोपित: स वै शूल्यां कर्मणा तेन दु:खित: (६।१४१।३६) । अस्त्री शूलं रुगायुधम् इत्यमर: । शूला स्यात्पण्ययोषिति इति च मेदिनी । तेन शूलोत्यपशब्द: । तदाङ्गाराणि बहुशो मुखे चास्य निचिक्षिपु: (६।१६७।१५) । अथ न स्त्री स्यादङ्गार इत्यमरवचनादङ्गारमित्यपि साधु । विवासनं च रामस्य वत्सराणि चतुर्दश (६।२४२।१८५)। वत्सर: पुमान् । संवत्सरो वत्सरोऽब्दइत्यमरे पुंसि पाठात् । महापराधमेतत्ते वत्सापहरणं मया (६।२४५।१२२) । घञन्तोऽपराध: पुमान् । तव नामानि कर्माणि गुणानि शाश्वतानि च (६।२५०।६३) । गुणानीति भयदोऽपभ्रंश: । चतुर्मुखमुखा अपि देववृन्दा: (७।१६।३३) । वृन्दं नपुंसकम् । स्त्रियां तु संहति वृंन्दं निकुरम्बं कदम्बकम् इत्यमरे पाठ: ।

**पुरुष व्यत्यय:**

य इह क्वाचित्क: पुरुषव्यत्ययो लक्ष्यते स दु:खाकरोति न: । स कस्मादिति न विजानीम: । कांश्चिदेव प्रदेशान्स्थूलोच्चयेन निर्दिशाम:—तत्तदेव मया दत्तं यद्भवानर्थितोसि मे (१।३०।१२५) । यूयं तिष्ठन्तु गच्छन्तु यद्भव्यं तत्तु नान्यथा (२।४३।४१) । यदि तुष्टोसि देवेश यदि देयो वरो मम । आदिकृच्चैव सर्वेषां यक्षाणामधिपो भवेत् (३।१६।१०) । स्थानि-

न्यस्मद्युपपदे उत्तमपुरुषो युज्यते। भवेयमिति तु वाच्यम्। तस्माद् व्रज महावीर शत्रुघ्नसविधे भवान् (५।४२।११)। शेषे प्रथम इति व्रजत्विति तु युक्तम्। उभयोः किं मया कार्यं तत्तथ्यं ब्रूहि मे भवान् (५।५६।५८)। कथं त्वं निष्कृपस्याहो राज्ञोऽहार्षीद्धयोत्तमम् (५।६३।११)। अग्रं हिरण्यगर्भस्त्वं भूतस्य समवर्तत (६।२४५:१८९)। समवर्त इति प्राप्ते।

### लङादेः स्थाने लिङ्

इह पुराणे यत्र तत्र लङः स्थाने लिङ्प्रयोगो दृश्यते भूयसा, यत्रानद्यतनापरोक्षकाला क्रिया विवक्षिता भवति ताच्छील्यं च दिद्योतयिषितम् (क्वचिल्लटः स्थानेऽप्यनिच्छार्थकेभ्यो धातुभ्यः)। सोऽयमस्थाने लिङ् प्रयोगः सप्तापि खण्डानस्य पुराणस्य व्यश्नुते। कांश्चित्तु प्रदेशानुदाहरामः—अनेन क्रमयोगेन नित्यमेव प्रसादयेत्। सोमशर्मा सुधर्मात्मा पितरौ परिपूजयेत् (२।४।२९)। प्रासादयत्, पर्यपूजयदिति प्राप्ते। प्रसादनं परिपूजनं चाशीलयदित्यर्थः। सोमशर्माणमाहूय पिता कुत्सति निष्ठुरः। निन्दितैर्निष्ठुरैर्वाक्यैस्ताडयेन्मुष्टिभिस्तदा (२।४।३०)॥ पूर्वार्द्धे लट्, उत्तरार्धे च लिङ् इति स्पष्टं लिङ्ङस्थाने। गीतं गायन्ति गन्धर्वाः स्तुवन्ति स्तावकाः स्तवैः। मन्त्रपाठैस्तदा विप्रान्माता स्नेहैन पूजयेत् (२।१४।३१)॥ शयने याति धर्मात्मा तदा कृष्णं प्रचिन्तयेत् (२।२१।३२)। प्रेषिता नैव गच्छेत्सा विघ्नमेव समाचरेत् (२।३०।५६)। अगच्छत्, समाचरदिति च प्राप्ते। स वै शान्तो जितात्मा च ताडयन्तं न ताडयेत् २।३३।१०)। अताडयदिति प्राप्ते। गतेषु तेषु देवेषु पिप्पलो द्विजसत्तमः। ब्रह्मण्यं साधयेन्नित्यं विश्ववश्यं प्रचिन्तयेत् (२।६१।३६)॥ असाधयत् प्राचिन्तयदिति च प्राप्ते। यथा सूर्यवपुर्भूत्वा प्रकाशाय चरेद्धरिः। सर्वेषां जगतामेव हरिरालोकहेतवे (३।६१।६१)। चरतीति प्राप्ते। तथैवान्तः-प्रकाशाय पुराणावयवो हरिः। विचरेदिह भूतेषु··· (३।६१।६२)॥ इहापि चरतीति पूर्ववत् प्राप्ते। न कोपि तत्र ह्रीयेत जीयेत महाबलः (५।४३।३३)। अह्रीयत अजीयतेति च प्राप्ते। वसेद्राजा सुषेणाख्यः सोमवंशसमुद्भवः (७।५।१९६)। भूतानद्यतनी क्रिया विवक्षितेति लङ्यवसदिति स्थाने स्यात्।

### अस्थान उपसर्गयोगः

गत्वोवाच ततः सा च वरोऽस्मत्तो विगृह्यताम् (१।५६।४८)। अस्थाने विः। विपूर्वो ग्रहिर्वियोजने आयोधने वा रूढः। अगारजठरे कृत्वा स चैनां प्राक्षिपत्क्षपाम् (१।५७।५)। प्रो विप्रकर्षमाह। केवलः क्षिपिः प्रयुज्यतां धात्वन्तरं क्षपयति वा। ततस्तं प्राह सा विप्रं वृद्धं प्रलालसम् (१।५७।८)। सोऽत्यर्थं लालसा द्वयोर् इत्यमरे तदा नर्व नाम्ना तृतीयचरणगतस्तर्षः परामृश्यते। अतिरिक्तस्तर्षो लालसोच्यते। अर्श आदित्वादचि तर्षवानपि लालसो भण्यते। प्रशब्दस्तर्ह्यस्थान एवेत्यभ्युपेयम्। यदा यदाऽसुरोऽस्माकं बाधां परिदधाति भोः (५।५।१५)। परिधानं परिवेष्टनं

प्रावरणं भवति। विस्तु प्रयोज्यः। यदादिष्टं नृपेणेह तीर्थयात्रां समिच्छता (५।१६।४३)। इषेरिच्छार्थकस्य सम्पूर्वत्वं न क्व चिदन्यत्र लक्ष्यते। न हि यः कश्चिद् धातुर्येन केनाप्युपसर्गेण शक्यो योक्तुम्। व्यवहारो हि वारयति। इति संवाच्य कुपितो लवः (५।५४।१८)। अपूर्वो ब्रुवः समा योगः। स्तनन्धयन्तं निजगौ वाक्यं सुमनोहरम् (५।५५।२२) निपूर्वो गायतिरिहैव श्रूयते। मूढोऽहङ्कारसंयुक्तो द्विजानां परिनिन्दकः (६।१३६।१०)। वुञि केवलो निन्दिः प्रयुज्यते प्रायेण। आचार्येणापि (३।२।१४६ सूत्रे) केवलान्निन्दे वुञ् शिष्टः। दुष्टात्मा मवजीवप्रबन्धकः (६।१६०।३०)। केवलो बध्नातिर्बन्धने नियन्त्रणेऽर्थे प्रयोगमवतरन्दृष्टः। प्रपूर्वस्त्वर्थान्तरमाचष्टे। आस्थितः स्वगृहे नक्तं दूयमानेन चेतसा (६।१५१।४४)। आङ्पूर्वस्तिष्ठतिः सकर्मक आश्रयणे परिग्रहणे प्रतिज्ञाने वा वर्तते। तेन स्थित (=अवस्थितः) इत्येव साधु। बलिं संददते तु यः (६।१६२।३)। प्रदानमादानं व्यादानं परिदानम् इत्यादयस्तु विश्रूयन्ते प्रयोगाः, सन्दानं त्विहैव श्रोतव्यं भवति। व्यलभत द्विजमेतत्तीर्थप्रसादात् (६।२१०।७०)। केवलोलभिस्तु प्रयोज्यः। विपूर्वस्य प्रयोगाभावात्। कामं वञ्चनेर्थे विप्रपूर्वः प्रसिध्यति। कतिभिर्वासरैः सा तु पूर्णाहारा व्यजायत (६।२२०।३८)। अस्थाने विः। विपूर्वो जनिः प्रसवे गर्भविमोचने रूढः। एकदा तस्य काकस्य भार्याण्डद्वयमालयै। प्रतिमुच्य गता (६।२२२।४)। अस्थाने प्रतिः। प्रतिमुचिस्तु ग्रहणे बन्धने वा वर्तते। विश्वार्णवं निम्नमिमं विबोर्य (७।१०-७७)। अवतीर्येति वक्तव्यम्। वितरतिस्तु दाने रूढः।

### व्यवहारातिक्रमोऽर्वाचीनव्यवहारानुकारश्च

अस्तीह कश्चिच्छिष्टशीलितः परम्परीणोऽभिधेयाभिधानप्रकारविशेषः, यो वागात्मा। यस्मिन्नतिक्रान्ते वाक् स्वरूपात्प्रच्यवते। इह पुराणे क्वचित्प्राचीनः स ह्यापितो नूतनश्च भाषान्तरप्रभावप्रसूतः समास्थित इति तस्य दिङ्मात्रमुदाहरामः—प्रश्नभारो महानेषः (१।१६।४०)। एष प्रश्नो महान् भार इत्येवं व्यवहारोनुगतो भवति। प्रश्ने महाभारत्वमारोप्यते। व्यासेनैव विधेयत्वं व्यक्ततरं भवति। अहं कथं सखीनां तु दर्शयिष्यामि वै मुखम् (१।१७।१४७)। एषोर्वाचीनो व्यवहारः। अहं कथं सखीनामभिमुखी भविष्यामीति तु पुरातनः। दैननन्दिनीं पितॄणां तु पूजाम् (१।३३।१२१)। दैनन्दिनीत्यसम्प्रदाय आगन्तुकः शब्दः। पूर्वं तु प्रात्यहिकी, आन्वाहिकीति वा व्यवहरन्ति पुरा। मृतानां पृष्ठतः कश्चिद् गतो नैव च दृश्यते (१।३३।१२८)। मृताननुगच्छन्न दृश्यत इति, मृताननुगतो वा न दृश्यत इत्येवं व्यवहारः पुराणः पुरस्कृतो भवति। मुखं प्रेक्ष्य सदा कालं वर्तते तव सुन्दरि (१।३४।२६)। कालमिति व्यतिरिक्तं व्यवहारं दूषयति। अनन्वयश्च। सदेति सप्तम्यर्थे दाप्रत्ययः। कालमित्यत्यन्तसंयोगे द्वितीया। सवनस्यापरां सन्ध्यां कर्तुं मन्दाकिनीं गतः (१।४५।३६३)। सन्ध्यामुपासितुमित्येव पुरातनो व्यवहारः। दिव्यं वर्षशतं यातं तपन्त्यां देवमातरि (२।

५।७८)। अस्थाने भावलक्षणा सप्तमी। यस्याऽनिर्ज्ञातकाला क्रिया कस्य चिदन्यस्य निर्ज्ञातकालया क्रियया लक्ष्यते तत्र सप्तमीति यस्य च भावेन भावलक्षणम् इति सूत्रार्थः। अत्र तु तपन्त्या देवमातुरिति शैषिक्या षष्ठ्या वक्तव्यम्। तस्माद् विरज्य शरणं तव आगतो स्मि (२।२२।२४)। शरणं त्वामागतोस्मीति वक्तव्यम्। शरणं रक्षितारमाह। एष शिष्टव्यवहारः। षष्ठीप्रयोगस्तु भाषान्तरप्रभावजोऽर्वाक्कालः। गलदश्रुचलन्नेत्रा परिरेभे पतिं निजम् (५।१२।२१)। इत्युक्त्वा तां निजां पत्नीम् (५।१२।२३)। सम्बन्धिशब्देषु प्रयुज्यमानेषु सम्बन्धवाचकाः स्वादयो न दीयन्ते। एष व्यवहारः। मातरं नमति, पितरं नमतीत्युच्यते न तु स्वां (निजां) मातरं स्वं पितरं नमतीति। या यस्य माता तां नमति, यो यस्य पिता तं नमतीति गम्यते। आधुनिकास्तु सम्बन्धवाचकं रोचयन्ते व्यवहारं चोच्चरन्ते। न जगाम तपः कर्तुं रेवां लोकैकपावनीम् (५।१४।४६)। चरतेः प्रयोग एव शिष्टामिष्टः। चेन्मत्तः प्राणिनां सौख्यं भवेदिह तदा पुनः (५।हु०।३९)। चेच्छब्दो वाक्यादौ न प्रयुज्यते, पूर्वं वाक्ये चेच्छब्दे प्रयुक्ते सत्युत्तरवाक्ये तदाशब्दो न दीयत इति पुरातनो व्यवहारस्तं प्रास्मरन्नर्वाचीनाः। एवं धेनुं पूजयतो गतास्तु दिवसा घनाः (५।३१।२।२३)। घना बहुलाः। अत्रार्थे हिन्द्यां प्रचरति प्रयोगो न संस्कृते। उपयेमे विवाहेन रम्यां सीतामयोनिजाम् (५।३६।१६)। उपयेमे इत्येव व्यवहारः। उपयमिरात्मनेपदी विवाहविशिष्टं स्वकरणमाह न स्वकरणमात्रमिति काशिका। दृष्ट्वा षाणान् निजविमोचितान् (५।४२।३६)। निजशब्द आत्मीयार्थो न त्वात्मार्थं इति पूर्वे वाग्योगविदः। तत्र लग्ना विरेजुस्ते त्रिकूटशिखराणि किम् (५।४२।३७)। किंशब्द इवार्थे। अत्रार्थेऽयमव्यवहृतचरः। शरणं पालय मुने कालो मे निर्गमिष्यति (५।१०९।७१)। यास्यतीत्य स्यस्थाने ऽधुनातनः प्रयोगः। जीवितायामथो पत्न्याम् (५।११०।१२)। प्राचीनास्तु जीवन्त्याम्, जीवायामिति वा स्म प्रयुञ्जते। जीवितम् इति नपुंसके भावे क्तान्तमिच्छन्ति प्रायेण। भोगार्थं किं प्रयच्छामि तुभ्यं भावुक कथ्यताम् (६।१२।१३) भावुक इति सहृदयेऽर्थे प्रयोगो यथा हिन्द्याम्। संस्कृते तु भावुकं कल्याणमाह। भावुकं भविकं भव्यम् इति कोषश्च। ततः संन्यासमादाय (६।२१६।२०)। आदानं परतः कस्यचिदर्थस्य ग्रहणं भवति। इहाङ्पूर्वस्य ददातेः प्रयोगोऽसमीचीनः। तमालक्ष्य समीपस्थं स जनः प्रहरप्रदः (६।२१७।२०)। द्वौ यामप्रहरौ समाविति प्रहरशब्दो यामपर्यायः प्रसिद्धः। प्रहरप्रद इति नियतं भाषान्तरप्रभावजो नूत्नः कल्पितः शब्दः। कृष्णास्तमाक्रोशं श्रुत्वा तूष्णीमुवास (६।२५२।४३)। तस्थाविति वक्तव्यम्। उवासेति प्रयोगोऽर्वाक्तनः।

संस्कृते यत्रैकेन धातुना क्रियोच्यते तिङा प्रत्ययेन सहायेन, तत्रार्वाक्तनीषु भाषासु करोतिना कृत्प्रत्ययान्तेन कर्मणा सहचरितेन सोर्थोभिधीयते। तामिमां शैलीमनुकरोति पुराणकारः, अर्वाचीनतां च स्वस्य वाचः प्रसाधयति। इत्थम्भूतानां प्रयोगाणां दिङ्मात्रमुदाहरामः—कृपां कृत्वा

ममोपरि (५।६।१५) मां कृपयन्निति वक्तव्ये। भोगं कुरु सत्तपःफलम् (५।१३।६) भुङ्क्ष्वेति वक्तव्ये। पर्णानां भक्षणं चरन् (=कुर्वन्) (५।१२।६५)। (पर्णानि) भक्षयन्निति वक्तव्ये।

### हृदयङ्गमा उपमोत्प्रेक्षाः

शोभन्ते धातुसंकाशैरङ्कुरैः प्रावृता द्रुमाः। कुलीनैरिव निश्छिद्रैः स्वगुणैः प्रावृता नराः (१।१५।२९-३०)॥ पवनाविद्धशिखरैः स्पृशन्तीव परस्परम्। आजिघ्रन्तीव चान्योन्यं पुष्पशाखावतंसकाः (३०-३१)॥ नागवृक्षाः क्वचित्पुष्पैर्द्रुमवानीरकेसरैः। नयनैरिव शोभन्ते चञ्चलैः कृष्णतारकैः (३१-३२)। अतिमुक्तकवल्लीभिः पुष्पिताभिस्तथा द्रुमाः। उपगूढा विराजन्ते स्वनारीभिरिव प्रियाः (३६-३७)॥ अन्योन्यमर्चयन्तीव पुष्पैश्चैव फलैस्तथा। मारुतावेगसंश्लिष्टैः पादपाः सालबाहुभिः (३९)॥ कदम्बपुष्पस्य जयं घोषयन्तीव षट्पदाः। क्वचित्पुष्पासवक्षीबाः सम्पतन्ति ततस्ततः (४७)॥ जातीचम्पकवत्पुष्पैः शाखालग्नैः शुकैः शुभैः। केतकीव बलाकाभिरशोभत सरिद्वरा (१।१८।९३)॥ कोकिलाभिः समालेव फेनकैः पुष्पितेव सा। हरेणेव यथा गङ्गा प्लक्षेणेव हि सा तथा (९४)॥ भवतैव विनिर्मितमादियुगे सुरहेतिसमूहवरं कुलिशम्। दितिजस्य शरौघमवाप्य गतं शतधा मतिभेदमिवाल्पविदः (१।४१।३५-३६)॥ तयोश्चम्वोस्तदानीं तु बभूव स समागमः। द्यावापृथिव्योः संयोगो यथा स्याद्युगपर्यये (१।४३।२०५)॥ अस्त्रैरन्ये विनिर्भिन्ना रक्तं वेमुर्हता युधि। क्षरज्जलानां सदृशा जलदानां समागमाः (१।४३।२१९)॥ नृत्यन्तमिव चोर्मिभिर्वल्गन्तमिव वायुना। हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च (समुद्रम्) (१।१९।१९७-९८)॥ नराः प्रभञ्जनोद्धूता मुक्तकेशा निरोजसः। पतन्तोऽत्र समीक्ष्यन्ते वेताला इव भूगताः (५।२४।५०)॥ ते बाणाः पपुरेतस्य रुधिरं बहु दारुणाः। पीत्वा पेतुः क्षितौ कूटसाक्षिणः पूर्वजा इव (५।२७।२७)॥ शिरोधरां चकर्ताशु पद्मनालमिव क्षणात् (५।२७।४५)। अनेकवाणनिर्भिन्नस्रवद्रक्तकलेवरः: पुष्पितः किंशुक इव शुशुभे रणमध्यगः (५।६२।२५)॥ गौरिव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः। परासोः पुष्पमालेव श्रीः कदर्यस्य निष्फला (६।७।२१)॥ यथाङ्गनानां सकलं सौरभ्यमत्युत्तमकान्तिमित्रम्। मन्ये परित्यक्तमनोविनोदा कस्तूरिका गाहति कालिमानम् (६।१२।३८)॥ ततः सम्पूरयामास मुखं शुम्भस्य पत्रिभिः। यथा पर्णचयैर्वातो मन्दरस्येव कन्दरम् (६।१३।८)॥ ऋते सुतमृणी लोके पितॄणां धनवानपि। सजलो पि विना वर्षं चातकानां यथा घनः (६।२०१।२२) उदयस्थेन पुत्रेण वर्धते स्वयशः पितुः। निर्मलद्विजराजेन नीरं नीरनिधेरिव (२५)॥ धनिनो न विमुञ्चन्ति वन्धवोऽन्ये च ये जनाः। मधुमत्सुमनोयुक्तं पादपं मधुपा इव (३९)॥ धनाभावेन गृहिणां कृशत्वमुपजायते। सर्वतो ग्रीष्मसमये नभसां सरसामिव (४०)। दुष्टस्वभावं न मुञ्चन्ति दुष्टाः सत्सङ्गमादपि। गङ्गाम्बु सङ्गमेनापि क्षारतामिव नीरधीः (६।२१५।

४०) ।। साधवोपि न मुञ्चन्ति स्वभावं दुष्टसङ्गताः। वृता विषाग्नियुक्सर्पैः श्रीखण्डा इव शीतताम् (४३) ।। कुतश्चित्कारणात् साधोः क्रुद्धस्य प्रकृतिः क्षमा। हुताशनप्रतप्तस्य शीतत्वमिवाम्बुनः (५०) ।। क्षुधाग्निना सुमहच्छरीरं गय दह्यते। यथैव ज्वलितो वृक्षः कोटरस्थेन वह्निना ७।२०।६०) ।। नारायणयशोगीतं प्रतिकण्ठं विनिः सृतम्। श्रुत्वा मूढा न नृत्यन्ति श्वानो वीणाक्वणं यथा (७।२२।१३०) ।। सन्तो हर्षं समायन्ति श्रुत्वा गीतं जगत्पतेः। समस्तपापविध्वंसं वीणाक्वाणं यथा मृगाः (७।२२।१३१) ।।

### अनुप्रासच्छटा

पक्वं कुङ्कुमकिञ्जल्कपुञ्जपिङ्गजटासटम् (१।४५।२२६) । प्रेङ्खत्कपोलपर्यन्तचुम्बिलम्बिजटाचयम् (२३८)। बन्ध बन्ध ग्रसच्छिन्धि भिन्धि भिन्धीति वादिनः (५।२०।६४)। केवलं काम कलना-ललना ललितस्थितः (५।६६।२)। कलकण्ठ-कलालापकल्लोलितदिगन्तरे (६।१८४।१६)। चण्डमुण्डभुजादण्डखण्डदोर्दण्डमण्डिते (६।१८६।३०)।

### सुभाषितावलिः

रविर्हि रश्मिजालेन दिवा हन्ति बहिस्तमः। सन्तः सूक्तिमरीच्योघैश्चान्तर्ध्वान्तं हि सर्वदा इति नारदीये पुराणे (४।३७)। सन्ति नाम विरलाः केचन प्रवाचः कवीन्द्रा येऽविप्लुतार्थाः सार्त्राश्चेतोहराः प्रस्तावप्रस्तव्या गिरः सन्दृभन्ति। तादृशश्चेह पुराणेऽनल्पाः समुल्लसन्ति विप्रकीर्णाः। ता इमा विचार्य विचार्य सङ्गृह्णीमो रलिकजनास्वादाय विनेयविनयाय च—भारतं (=महाभारतं) भानुमान् विष्णुर्यदि न स्युरमी त्रयः। ततोऽज्ञानतमोन्धस्य काऽवस्था जगतो भवेत् (१।१।४२) ।। एको मुनिस्ताम्रकराग्रहस्तो ह्याम्रेषु मूले सलिलं ददाति। आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा (१।११।७५) ।। यज्ञं कृत्वा पशुं हत्वा कृत्वा रुधिरकर्दमम्। यद्येवं गम्यते स्वर्गो नरकः केन गम्यते (१।१३।३२३) ।। गोपीमन्थनशब्देन बालवत्सरवेण च। गवां हुंकारशब्देन अलक्ष्मीः प्रतिहन्यते (१।१८।३१३) ।। प्रायः कृतार्थो लोकोऽयं मन्यते नोपकारिणम्। वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् (३३३—३३४) ।। आत्मैव वञ्चितस्तेन यः परं वञ्चयिष्यति (३३८)। न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् (३६७)। यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति। विश्रम्य च पुनर्याति तद्वद् भूतसमागमः (३७१-३७२) ।। लोको वदति वाक्यानि चन्दनं किल शीतलम्। पुत्र-गात्रपरिष्वङ्गश्चन्दनादतिशीतलः (३७८-३७९) ।। राजन्प्रतिग्रहो घोरो मध्वास्वादो विषोपमः (१।१९।२३४)। यस्य धर्मार्थमर्येहा तस्यानाहा गरीयसी। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् (१।१९।२५१-२५२) ।। सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम्। उपानद् गूढपादस्य तस्य चर्मावृतेव भूः (१।१९।२५८-५९) ।। कामानभिलषन्मोहान्न नरः सुखमेधते। श्येनालयतरुच्छायां व्रजन्निव कपिञ्जलः (१।१९।२६३-६४) ।। तपो यज्ञस्तथा दानं दमादेव

प्रवर्तते । किमरण्ये त्वदान्तस्य दान्तस्यापि किमाश्रमे (१।१६।३१३) ।। वनेपि दोषाः प्रभवन्ति रागिणां गृहेपि पञ्चेन्द्रियनिग्रहस्तपः । अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् (३१५) ।। सुखं च दान्तः स्वपिति सुखेन प्रतिबुध्यते । समः सर्वेषु भूतेषु मनो यस्य प्रबुध्यते (३१६) ।। न रथेन सुखं याति न हयेन न दन्तिना । यथात्मना विनीतेन सुखं याति महापथे (३२०) ।। न तु कुर्याद्धरिः स्पृष्टः सर्पो वाप्यतिरोषितः । अरिर्वा नित्यसंक्रुद्धो यथात्मा दमवर्जितः (३२१) ।। न यमं यममित्युहुरात्मा वै यम उच्यते । आत्मा वै यमितो येन स यमस्तु विशिष्यते (३२२) ।। दमेन हीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः । साङ्ख्यं च योगश्च कुले च जन्म तीर्थाभिषेकश्च निरर्थकानि (३३८) ।। अपमानात्तपोवृद्धिः संमानाच्च तपः क्षयः । अर्चितः पूजितो विप्रो दुग्धा गौरिव गच्छति (६४०) ।। आक्रोशेन समो लोके सुहृदन्यो न विद्यते । यस्तु दुष्कृतमादाय सुकृतं स्वं प्रयच्छति (३४२) ।। एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदिमं क्षमया युक्तमशक्तं मन्यते जनः (३५०-३५१) ।। श्रूयतां धर्मसर्वस्वं श्रुत्वा चैतत् प्रधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् (३३५-३५६) ।। अवमाने वधः प्रोक्तः पुत्र संभावितस्य तु (१।४४।१३) । प्रायः प्रसादे कोपेऽपि सर्वं हि महतां महत् (१।४५।२१३) । असद्ग्रहस्य का कीर्ति र्व्यसनस्य क्व यन्त्रणा । विपरीतार्थबोद्धारः सत्पथे केन योजिताः (३४२) ।। कुलजन्मवयोरूपविभुत्वैः सहितोऽपि यः । वरस्तस्यापि नाहूय सुता देया ह्ययाचतः (३६८) ।। यथोन्मादादिदुष्टस्य मतिरेव हि सा भवेत् । इष्टानेव पदार्थान् वै विपरीतान् हि मन्यते (३५४) ।। कस्य नो मनो विशृङ्खलं जगति हि कन्यकापितुः (१।४५।४४२) । शिशुः कष्टो भुजङ्गमः (१।४६।१६५) । विप्रपादतलोद्धृष्टिक्षती भवति यः करः । स करः श्रीकरो नाम अन्यः कर्मकरः करः (१४८।११०) ।। न विप्रपादोदककर्दमानि न वेदशास्त्रप्रतिघोषितानि । स्वाहास्वधास्वस्तिविवर्जितानि श्मशानतुल्यानि गृहाणि तानि (१२२) ।। जन्मनः ब्राह्मणो ज्ञेयः संस्कारै र्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणम् (१२६) ।। नदीनां जाह्नवी श्रेष्ठा प्रमदानां प्रतिव्रता । मनुष्याणां प्रजापालो देवानां च जनार्दनः (१।५२।५१) ।। संसारे यस्य सत्पुत्रा भक्तिमन्तः सदैव हि । सुशीला ज्ञान-सम्पन्नाः सत्यधर्मरताः सदा । संभवन्ति गृहे तस्य यस्य विष्णुः प्रसीदति (२।१६।५५—५६) ।। पुत्रिण्यश्चैकपुत्रेण नार्यो लोके भवन्ति हि (२।६।३) । उन्नता गिरिदुर्गेषु वृक्षाः सन्ति सुपुष्पकाः । पतन्ति वातवेगेन समूलास्तु घनास्तथा । सत्यधर्मविहीनास्ते तथा यान्ति यमक्षयम् (२।१०।१६-१७) ।। लोभः पापस्य बीजं हि मोहो मूलं च तस्य हि (२।११।१६) । धनं धान्यं कलत्रं तु पुत्रपौत्रमनन्तकम् । स भुङ्क्ते मर्त्यलोके वै यस्य विष्णुः प्रसन्नवान् (२।१७।५७) ।। यथा वह्निप्रसङ्गाच्च मलं त्यजति काञ्चनम् । तथा सतां हि संसर्गात् पापं त्यजति मानवः (२।३३।२१)।। एकैव सार्थिका चिन्ता धर्मस्यार्थे विचिन्त्यते (२।३३।२८) । द्वितीया सार्थिका चिन्ता योगिनां धर्मनन्दिनि ।

अन्या निरर्थिका चिन्ता तां नैव परिकल्पयेत् (२।३३।३०)।। कायनाशकरी चिन्ता बलतेजः प्रणाशिनी। नाशयेत् सर्वसौख्यं तु रूपहानिं निदर्शयेत् (३१)।। तृष्णां मोहं तथा लोभमेतांश्चिन्ता हि प्रापयेत्। पापमुत्पादयेच्चिन्ता चिन्तिता च दिने दिने (३२)। गङ्गातोयेन सम्पूर्णः कुम्भ एव प्रदृश्यते। सुराया बिन्दुना लिप्तो मद्यकुम्भः प्रजायते (२।३४।६)।। आचारेण विना मर्त्यो ज्ञानहीनो यति यथा (२।४२।४३)। कैवर्तेन विना नौर्वा सम्पूर्णा परिसागरे। न भात्येव यथा सार्थः सार्थवाहेन वै विना (४४)।। द्वयोश्च सिंहयो र्मध्ये जलं पिबति सूकरः। द्वयोः सूकरयो र्मध्ये सिंहो नैव पिबत्यपः (२।४३।६१-६२)।। पृथक्छय्या यदा नारी तदा सा पुंश्चली मता (२।५०।४५)। अग्नेः शिखां कः परिसंस्पृशेद्वै तरेद्धि कः सागरमेव मूढः। गले तु बद्ध्वा सुशिलां भुजाभ्यां को वा सतीं वश्यति (=वशयति) वीतरागाम् (२।५५।१३)।। न तत् सुखाय मन्तव्यं परमार्थेन पण्डितैः। मृतोपमश्च यः शेते सर्वकार्यविनिर्गतः (२।६६।१४८)।। अर्थस्योपार्जने दुःखं दुःखमर्जितरक्षणे (१५१)। नाशे दुःखं व्यये दुःखमर्थस्यैव कुतः सुखम्। चौरेभ्यः सलिलेभ्योऽग्नेः स्वजनात्पार्थिवादपि (१५२)। भयमर्थवतां नित्यं मृत्यो र्देहभृतामिव। खे यथा पक्षिभिर्मांसं भक्ष्यते श्वापदै र्भुवि (१५३)।। जले च भक्ष्यते मत्स्यैस्तथा सर्वत्र वित्तवान् (१५४)। कुटुम्बचिन्ताकुलितस्य पुंसः श्रुतं च शीलं च गुणाश्च सर्वे। अपक्वकुम्भे निहिता इवापः प्रयान्ति देहेन समं विनाशम् (१६२)।। राज्येऽपि हि कुतः सौख्यं सन्धिविग्रहचिन्तया। पुत्रादपि भयं यत्र तत्र सौख्यं हि कीदृशम् (१६३)।। न ह्यस्ति सर्ववित्कश्चिन्न वा मूर्खोऽपि सर्वतः। यावद्यस्तु विजानाति तावत्तत्र स पण्डितः (१७६)।। एवं वस्त्रयुगं राज्ञां प्रस्थमात्राऽम्बुभोजनम्। यानं शय्यासनं चैव शेषं दुःखाय केवलम् (१७९)।। प्रत्यूषे तूर्यनिर्घोषः समं पुरनिवासिभिः। राज्येऽभिमानमात्रं हि ममेदं वाद्यते गृहे (१८१)।। सर्वमाभरणं भारः सर्वमालेपनं मलम्। सर्वं प्रलपितं गीतं मृत्युरपहृतचेष्टितम् (१८२)।। नरैः पुण्यफलं स्वर्गे मूलच्छेदेन भुज्यते। न चान्यत् क्रियते कर्म सोऽत्र दोषः सुदारुणः (१८६)।। पञ्चैतानीह सृज्यन्ते गर्भस्थस्यैव देहिनः। आयुः कर्म च वित्तं च विद्या निधनमेव च (२।८१।४७)।। यथा मृत्पिण्डतः कर्ता कुरुते यद् यद् इच्छति। तथा पूर्वकृतं कर्म कर्तारमनुगच्छति (४८)।। मरणे यादृशो भावः प्राणिनां परिजायते। तादृशाः स्युस्तु सत्वास्ते तद्रूपास्तत्परायणाः। तद्गुणास्तत्स्वरूपान्ते भावभूता भवन्ति हि (२।१२३।४६-४७)।। अचिन्त्याः खलु ये भावास्तान्न तर्केण साधयेत्। (३।३।१२) योजयेदित्यन्यत्र पाठः। तावदेव नयधी र्विराजते तावदेव जनताभयं भवेत्। तावदेव धृतचित्तता भृशं तावदेव गणना कुलस्य च (३।२२।४०)।। तावदेव तपसः प्रगल्भता तावदेव शमसेवनं नृणाम्। यावदेव ललनेक्षणासवै र्माद्यते द्रुतमदैर्न पूरुषः (४१)।। तावद् विद्या प्रभवति तावज्ज्ञानं प्रवर्तते। तावत्सुनिर्मला मेधा सर्वशास्त्रविधायिनी। तावज्जपस्तपस्तावत् तावत्तीर्थनिषेवणम् (३।६१।१६।१७)।। तावच्च

गुरुशुश्रूषा तावद्वितरणे मतिः। तावत्प्रबोधो भवति विवेकस्तावदेव हि (१७)॥ तावत्सत्यं सङ्गरुचिस्तावत्पौराणलालसा। यावत् सीमन्तिनीलोलनयनान्दोलन नहि (२८)॥ या जिह्वा रघुनाथस्य नामकीर्तनमादरात्। करोति, विपरीता या फणिनो रसनासमा (५।१६।३६)॥ गुरवः कृपया युक्ता भाषन्ते सेवकेऽखिलम् (५।३६।२)। रामस्मारी कदाप्येव न भवेद्रिपुतो भयी (५।५५।६४)। सूर्यो जगत्प्रकाशाय समुदेति जगत्यहो। उलूकानां रुचिकरो न भवेत्तत्र का क्षतिः (५।५८।११-१२)॥ फलं हि साधनायत्तं हेतुः फलवशो न तु (५।६६।६६)। संसारे स्मिन् क्षणार्धोपि सत्सङ्गः शेवधिर्नृणाम्। यस्मादवाप्यते सर्वं पुरुषार्थचतुष्टयम् (५।८४-२४)॥ यजन्ति ये यथा देवान् देवा अपि तथैव तान्। छायेव कर्मसचिवाः साधवो दीनवत्सलाः (२७)॥ नास्ति चिन्तासमं दुःखं कायशोषणमेव हि (५।८७।४७)। सन्तः प्रतिष्ठा दीनानां दैवादुद्भूतपाप्मनाम्, आर्तानामार्तिहन्तारो दर्शनादेव साधवः (५।६४।२२)॥ न तृप्तिरशनादन्या न गुरुर्जनकादपि। न पात्रमन्यद् विप्रेभ्यो न देवः केशवात् परः (४६)॥ न गङ्गया समं तीर्थं न दानं सुरभीसमम्। न गायत्र्या समं जाप्यं न द्वादश्या समं व्रतम् (५०)॥ न भार्यया समं मित्रं न धर्मो दयया समः। न स्वातन्त्र्यसमं सौख्यं गार्हस्थ्यान्नाश्रमो वरः (५१)॥ न सत्यात्पर आचारो न सन्तोषात्परं सुखम् (५२)। यत् कृष्णप्रणिपातधूलिधवलं तद्वर्ष्म तद्वच्छुभम्, ते नेत्रे तपसार्जिते सुरुचिरे याभ्यां हरिर्दृश्यते। सा बुद्धि विमलेन्दुशङ्खधवला या माधवव्यापिनी, सा जिह्वा मृदु भाषिणी नृप मुहुर्या स्तौति नारायणम् (५।६५।१७)॥ उन्नता गिरिदुर्गेषु वृक्षाः सन्ति सुपुष्टकाः। पतन्ति वातवेगेन समूलास्तु घना अपि (५।६६।१३६)॥ सत्यधर्मविहीनास्ते तथा यान्ति यमालयम्। सामान्यं सर्वजन्तूनां बलं धर्मस्तु केवलः (४०)॥ व्यसनस्य च मृत्याश्च व्यसनं कष्टमुच्यते। व्यसन्यधोऽधो व्रजति स्वर्गाम्यव्यसनी नृप (५।६६।३१)॥ धर्मं शनैः संचिनुयाद् वल्मीकमिव पुत्तिकाः। धर्मेण हि सहायेन तमस्तरति दुस्तरम् (५।६६।१६)॥ विनयो रत्नमुकुटं सत्यधर्मौ च कुण्डले। त्यागश्च कङ्कणो येषां किं तेषां जडमण्डनैः (२८)॥ अविश्राममनालम्बमपाथेयमदेशिकम्। मृतः कान्तारमध्वानं कथमेको गमिष्यसि (२३)॥ भूतिभिर्नष्टदृष्टाभि नृत्यन्ते न महाशयाः। नागताभिर्न याताभिर्नदीभिश्चीयतेऽम्बुधिः (३०)॥ ध्यानमेव कृते श्रेष्ठं त्रेतायां यज्ञ एव च। द्वापरे चार्चनं तिष्ये दानं च हरिकीर्तनम् (५।११४।३६५)॥ अन्नं हि प्राणिनां प्राणाः प्रत्यक्षं सर्वदेहिनाम् (५।११७।-३४)। गीरिव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः। परासोः पुष्पमालेव श्रीः कदर्यस्य निष्फला (६।७।२१)॥ महात्मानो न गृह्णन्ति हिंसमानान् रिपूनपि। सपत्नीं प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः (२२)॥ सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि। छिन्नोपि चन्दनतरुः सुरभयति मुखं कुठारस्य (२३)॥ दैवं परं विनश्यति तनुरपि न श्री र्निवेदिता सत्सु। अवशिष्यते हिमांशोः सैव कला शिरसि या शम्भोः (२४)॥

ते साधवो भुवनमण्डलमौलिभूता ये साधुतामनुपकारिषु दर्शयन्ति। आत्मप्रयोजनवशात् कृतच्छिन्नदेहाः पूर्वोपकारिषु खलोपि हितानुरक्तः (२५) ॥ मुनीन्द्रास्तं न शंसन्ति यस्त्यजेच्छरणागतम् (६।८।५६)। गृह्णन्तीति ग्रहाः सर्वे ग्रहाः पीडाकराः स्मृताः (६।३४।४०)। न लिङ्गं धर्मकारणम् (६।८०।१०६)। अवैष्णवो हतो विप्रो हतं श्राद्धमयोगि च। अब्रह्मण्यं हतं क्षत्रमनाचारं हतं कुलम् (६।१२५।१९) ॥ सदम्भश्च हतो धर्मः क्रोधेनैव हतं तपः। अदृढं च हतं ज्ञानं प्रमादेन हतं श्रुतम् (२०) ॥ उपजीव्या हता कन्या स्वार्थे पाकक्रिया हता। शूद्रभिक्षो हतो यागः कृपणस्य हतं धनम् (२२) ॥ अनभ्यासहता विद्या हतो राजा विरोधकृत्। जीवनार्थं हतं व्रतम् (२३) ॥ असत्या च हता वाणी तथा पैशुन्यवादिनी। सन्दिग्धश्च हतो मन्त्रो व्यग्रचित्तो हतो जपः (२४) ॥ हतमश्रोत्रिये दानं हतो लोकश्च नास्तिकः। अश्रद्धया हतं सर्वं कृतं यत् पारलौकिकम् (२५) ॥ कर्पूरागरुभारं हि उष्ट्रो वहति नित्यशः। मध्यगन्धं न जानाति तथा विष्णुबहिर्मुखाः (६।१३१।५१) ॥ मृगाः शालं हि जिघ्रन्ति कस्तूरीगन्धमिच्छवः। स्वनाभिस्थं न जानन्ति तथा विष्णुं बहिर्मुखाः (५२) ॥ उपदेशो हि मूर्खाणां वृथा वै नगनन्दिनि। तथैव विष्णुभक्ते हि उपदेशो बहिर्मुखे (५३) ॥ बुद्धिं परेषां दास्यन्ति लोके बहुविधा जनाः। स्वयमाचरते सोपि नरः कोटिषु दृश्यते (६।१३२।३५) ॥ यत्कर्म विष्णुदेवत्यं नहि गर्भस्य कारणम् (८४)। सर्वेषामेव भावानां भावशुद्धिः प्रशस्यते (९२)। स्वकरे कङ्कणं बद्ध्वा दर्पणैः किं प्रयोजनम् (९९)। स्वधर्मेणागतं द्रव्यं शुक्लद्रव्यं तदुच्यते (११०)। रज्जुबद्धाश्च पशवः प्रभुणा स्वेच्छया यथा। नीयन्ते कर्मबन्धेन मनुजा अपि भूतले (११६-११७) ॥ पङ्केनैव यथा पङ्कं रुधिरं रुधिरेण वै। हिंसया कर्मणा कर्म कथं क्षालयितुं क्षमः (१४०-१४१) ॥ अनपत्यः सुखी नित्यं कुपुत्रो दुःखदायकः (६।१९६।७४)। न चेन्द्रस्य सुखं किञ्चिन्न सुखं चक्रवर्तिनः। विरक्तस्य सुखं तात मुनेरेकान्तशीलिनः (७९) ॥ कर्मणां च लयो मोक्षः सुखदुःखप्रदायिनाम्। तदुत्पत्तिस्तु बन्धः स्यादित्यसौ शास्त्रनिर्णयः (६।२०४।२३) ॥ निधनं पुरुषं लोके सर्वे मुञ्चन्ति बान्धवाः। न मुञ्चन्ति सखायस्तु तद्दुःखेन दुःखिताः (६।२०७।६६-६७) ॥ समस्तसम्पत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः। अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः (६।२५५।५१) ॥ ज्ञानं सम्प्राप्य संसारे यः परेभ्यो न यच्छति। ज्ञानरूपो हरिस्तस्मै प्रसन्न इव नेक्षते (७।३।१८) ॥ यस्मिन्दिने मुनिश्रेष्ठ श्रूयते न हरेः कथा। तद्दिनं दुर्दिनं मन्ये घनच्छन्नं न दुर्दिनम् (७।१।३०-३१) ॥ निःश्रेयसं दानलभ्यं बललभ्या तु मेदिनी (७।३।२९)। परेण दत्तः सन्तापः सदा तिष्ठति नोत्तमे। सलिलं सन्तप्तं क्षणाच्छीतलतां व्रजेत्… (७।५।८५) ॥ सरोजिनीगुणं वेत्ति भृङ्ग एव न दर्दुरः (७।५।१०५)। कार्ये सिद्धे श्रमो न स्यादसिद्धे श्रम एव हि (११४) ॥ वनं परित्यज्य कृशानुभीत्या जलं प्रविष्टा नलिनी सुखार्थम्। सन्दह्यते तत्र हिमानलेन यद्यस्य

कर्म न तदन्यथा स्यात् (१५५) ।। चकोरपेयं पीयूषं गगने रोहिणीपतेः । किं शक्नुवन्ति तत् पातुं वायसा बलिनोऽपि च (७।७।८६-८७) ।। पुत्रप्रयोजना भार्याः पुत्राः पिण्डप्रयोजनाः (७।६।८६) । न प्राप्नोति सुखं जातु नीचसङ्गान्महानपि । प्रेतसङ्गान्महादेवो नग्नो भग्नविभूषणः (७।६।१०२-१०३)।। मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । मनस्यन्यद् वचस्यन्यत्कर्मण्यन्यद् दुरात्मनाम् (७।६।१०८-१०६) ।। पापेभ्यः पुण्य कर्माणि न रोचन्ते कदापि च । न रोचते मक्षिकाभ्यः सुगन्धि चन्दनं यथा (७।१७।२१५-२१६) ।। यस्मिन् सिन्धौ शशी जातस्तत्र क्ष्वेडोद्भवोऽपि च (७।१६।१२) ।

**इत्यवसिता सुभाषितावलिः ।**

आदेरान्तं परामृश्य पुराणं पाद्मसंज्ञकम् ।
आदेयं व्यक्तिमानीतमनादेयमुपेक्षितम् ।। १ ।।

अर्थः परीक्षितः सर्वः शब्दश्चेहापि लेशतः ।
अर्थः प्रधानमाख्याने शब्दस्तत्रोपसर्जनम् ।। २ ।।

पुराणेऽस्मिन्यथान्यत्र वाग्भ्रंशे नाम सत्यपि ।
इत्युपेयं क्वचित्कोणे स्थितं काव्यमनुत्तमम् ।। ३ ।।

मया वद्धेन तीर्थेन ह्युदाहारेण यत्नतः ।
प्रवेक्ष्यन्ति सुखं सन्तो गभीरां पाद्मनिम्नगाम् ।। ४ ।।

कीदृशीयं कृतिर्मे स्याद् गुण्याऽगुण्या च नोमयी ।
कृष्टयोऽत्र कषायन्ते तूष्णीकामास्महे वयम् ।। ५ ।।

इति श्री चारुदेवशास्त्रिणः कृतिषु पाद्मे पुराणे भूमिकेयं पर्यवसिता ।
शुभं भूयादध्यापकानामध्यायकानां च ।

॥ श्रीः ॥

# अथ पद्मपुराणस्थविषयानुक्रमणिका प्रारभ्यते ॥

अ० प० विषयाः

## प्रथमं सृष्टिखण्डम् ॥ १ ॥

१— १ मंगलाचरणम्, लोमहर्षणेनोग्रश्रवसऋषीन्प्रतिसर्वधर्मकथनायाज्ञादानम्, नैमिषारण्योत्पत्तिप्रस्तावः, नैमिषारण्यंप्रतिगतस्योग्रश्रवसस्तत्रत्यमहर्षिभिःसहसंवादः, पुराणश्रवणायशौनकप्रार्थना, सूतोत्पत्तिवर्णनम्, व्यासजन्मकथानिरूपणम्, पुराणप्रशंसायां पाद्मपुराणस्याधिकप्रशंसावर्णनम्, तत्रत्यमुख्यविषयवर्णनम्. श्लोकांकाः ६७ ॥

२— २ सूतकृतमंगलाचरणम्, सृष्टिखंडस्थविषयवर्णनम्, पुराणप्रशंसा, गंगाद्वारेपुलस्त्यभीष्मसंवादः, पुलस्त्येनब्रह्मणःसृष्टिप्रकारवर्णनम्, महदादिसकलसृष्टिवर्णनम्. श्लोकांकाः ११९ ॥

३— ४ कालपरिमाणम्, प्रलयेजलनिमग्नायाः पृथिव्याउद्धारणाय वाराहरूपस्य जलंप्रविष्टस्य भगवतःपृथ्वीकृतस्तुतिवर्णनम्, भगवत्कृतपृथिव्युद्धरणम्, ब्रह्मदेवकृत नवविधसृष्टीनांसंक्षेपेणवर्णनम्,सुरादिस्थावरांतचतुर्विधप्रजानांविस्तरेणसृष्टिवर्णनम्, मुखाद्यवयवविशेषाद्ब्राह्मणादिवर्णोत्पत्तिवर्णनपुरःसरंयज्ञनिष्पत्त्यर्थमोषध्यादिवर्णनम्, सृष्टप्राणिनांस्थानवर्णनम्, मानससृष्टिकथनेभृग्वाद्युत्पत्तिरुद्रोत्पत्तिः, स्वायंभुवोत्पत्तिः, स्वायंभुवप्रजासर्गवर्णनम्, भृगोर्लक्ष्म्युत्पत्तिवर्णनम्, श्लोकांकाः २०६ ॥

४— ७ समुद्रमंथनप्रस्तावेदुर्वाससइंद्रायशापप्रदानवर्णनम्, देवदैत्यैरेकत्रमिलित्वासमुद्रमन्थनम्,मथ्यमानात्समुद्रात्सुरभ्यादिरत्नोत्पत्तिः,लक्ष्म्युत्पत्तिसमनंतरंलक्ष्म्याविष्णुवरणम्, अमृतोत्पत्तौदेवानाममृतप्राशनम्, पुनर्भृगोःख्यात्यांलक्ष्म्युत्पत्तिः,नर्मदातीरेलक्ष्मीपुरयाचनावसरेभृगुणाविष्णोःशापदानम्, ब्रह्मणापुनःसृष्टिकरणम्, नारदेनब्रह्मणःसृष्टिस्वरूपवर्णनम्, ब्रह्मणानारदायवरप्रदानम्. श्लोकांकाः १३७ ॥

५— १० दक्षयज्ञविध्वंसकथानकम्, तत्र दक्षेणयज्ञे समारब्धे सति सत्याः दक्षेणसहसंवादः, दक्षकृतसतीसांत्वनम्, सत्या देहत्यागः, दक्षकृत शंकरस्तुतिः, शिवेनदक्षायवरप्रदानम्, सतीनिमित्तं शिवस्य गंगाद्वारे चिताकरणम्, हिमवदुत्पन्नायाः पार्वत्याः शिवेनसहविवाहः. श्लोकांकाः ९५ ॥

६— ११ दक्षात्प्राक्संकल्पदर्शनस्पर्शजन्यासृष्टिः, दक्षादूर्ध्वं मैथुनतःसृष्टिः,हर्यश्वानां शबलाश्वानांचनारदोपदेशेन मोक्षपथाश्रयणम्, विश्वदेववसुरुद्रादित्यदैत्यानामुत्पत्तिः, तत्रदैत्योत्पत्तौ संक्षिप्तबाणचरित्रम्, दानवशुक्रादिगरुडादिसमुत्पत्तिः. श्लो० ७२ ॥

७— १२ मरुदुत्पत्तिकथानकवर्णनम्, तत्र दितिव्रतकरणम्, कश्यपाद्गर्भप्राप्तिवर्णनम्, गर्भिणीधर्माः, व्रतलोपे सतींद्रेण दित्याः कुक्षौप्रविश्य वज्रेण गर्भस्यैकोनपंचाशत्खंडकरणम्, तेषांजीवतांगर्भखंडानां मरुदित्यभिधाकरणम्, तन्निरुक्तिश्च,

| अ० | प० | विषयाः |
| --- | --- | --- |
| | | प्रतिसर्गवर्णनेपृथुप्रभृतीनामाधिपत्यवर्णनम्, स्वारोचिषौत्तामितामसरैवतचाक्षुषवैवस्वतसावर्ण्यरौच्यमेरुसावर्णिऋभुऋतुधामाविष्वक्सेनानां चतुर्दशमनूनामुद्देशेनतत्तदंतरवर्णनम्. श्लोकांकाः ११५॥ |
| ८— | १४ | पृथुराजकथानकम्, तत्र संक्षिप्तपृथूत्पत्तिसमनंतरं पृथुना वत्सपात्रपयोदोग्धृभेदेन पृथिवीदोहनम्, दोहनोत्तरं पुरग्रामादिव्यवस्थाकरणपूर्वकं पृथिव्याः पृथुदुहितृत्ववर्णनम्, सूर्यवंशवर्णनम्, यमयमुनोत्पत्तिः, सावर्णिमनूत्पत्तिः, छायायाः सूर्यपत्न्याः संक्षिप्तचारित्रम्, संज्ञाया वडवारूपधारणम्, सूर्यतेजःशातनम्, सूर्यमूर्त्तेः पादावयवाकरणेहेतुः, अश्विनीकुमारोत्पत्तिः, शनेर्ग्रहत्ववर्णनम्, यमुनातपत्योर्नदीत्वम्, विष्टिघोरयोः कालत्वम्, वैवस्वतमनुवंशवर्णनम्, वैवस्वतपुत्रस्येलस्यशंभूपवनगमनात्स्त्रीत्वप्राप्तौबुधेन सहसंयोगः, इक्ष्वाकादीनामिलभ्रातॄणांशिवाराधनम्, तदाराधनतुष्टशंकरेण वरप्रदानादिलस्य मासप्राप्यपुरुषत्वमासप्राप्यस्त्रीत्ववर्णनम्, इलात्पुत्रोत्पत्तिः, इलावृतवर्षनामधेयम्, इलस्यवंशवर्णनम्, इक्ष्वाकुवंशवर्णनम. श्लोकांकाः १६१ ॥ |
| ९— | १७ | पितृवंशानुचरितम्, तत्रमायाव्यभिचाराद्भूलोके मत्स्ययोनिजसत्यवतीत्वप्राप्तिः पितृणांश्राद्धश्राद्धीयद्रव्यश्राद्धकालश्राद्धस्थानश्राद्धविधिवर्णनम्, अनुपनीतविधुरयोः साधारणश्राद्धविधिः, शूद्रस्यामंत्रकंश्राद्धम्, आभ्युदयिकश्राद्धम्. श्लोकांकाः १९२ ॥ |
| १०— | २० | एकोद्दिष्टश्राद्धविधिः, वर्णानुपूर्व्येण जननाशौचशावाशौचनिर्णयः, अस्थिसंचचयनादिप्रेतकर्म, लेपभाक्सपिंडपितृगणनिर्णयः, विप्रादिभोजनेन पितृगणतृप्तिविषयकशंकानिराकरणम्, श्राद्धविषये कौशिकसुनुकथानकम्. श्लोकांकाः१२७ |
| ११— | २३ | श्राद्धयोग्यप्रशस्तदेशवर्णनम्, सत्यदयेंद्रियनिग्रहशमानामपि तीर्थत्वम्,श्राद्धयोग्यप्रशस्तकालवर्णनम्. श्लोकांकाः ९९ ॥ |
| १२— | २४ | सोमवंशवर्णनम्, तत्र चंद्रोत्पत्तिः, चन्द्रकृतयज्ञवर्णनम्, चंद्रेणताराहरणे कृते सतिबृहस्पतियाञ्चयाप्यदत्तायां तस्यां रुद्रकृतयुद्धोत्तरं चंद्रेणबृहस्पतये तारादानम्, चंद्रवीर्यात्तारायां बुधोत्पत्तिः, बुधात्पुरूरवसोजन्म,पुरूरवसश्चरित्रम्, पुरूरवसः पुत्रादिवंशवर्णनम्, बृहस्पतिकृतं रजिपुत्रमोहनम्, कार्तवीर्यनामस्मरणमाहात्म्यम्. श्लोकांकाः १४० ॥ |
| १३— | २७ | क्रोष्टुवंशविस्तारवर्णनम्, तत्र वंशानुवंशस्थस्त्रीपुरुषाणां संक्षिप्तचरित्रवर्णनपुरःसरंस्यमंतकमणिसंक्षिप्तचरित्रम्, कुंतीतः पांडवोत्पत्तिवर्णनम्, देवक्यांकृष्णोत्पत्तिवर्णनम्, वसुदेवदेवकीनंदयशोदानां पूर्वजन्मवर्णनम्, कृष्णसंतानवर्णनम्, पृथिव्यां भगवदवतारकारणवर्णने देवपराजितदैत्यप्रार्थितशुक्रकृतदैत्योत्कर्षार्थकतपश्चर्याकरणम्, दैत्यानां शुक्रमातृकृतरक्षणे विष्णुकृतशुक्रमातृवधवर्णनम्,भृगुणाविष्णवेशापदानम्, भृगुणास्वपत्नीसंजीवनम्,इंद्रेणस्वकन्यायाजयंत्याःशुक्रसमीपेसेवार्थं प्रेषणम्, जयंत्याशुक्रशुश्रूषणम्, शुक्रस्य शिवेनवरप्रदानम्,जयंत्यासह शुक्रस्य शतवर्षपर्यंतम् गुप्तागारेऽदृश्यतयानिवासः, बृहस्पतिना शुक्रवेषेण दैत्यमोहनम्, बृहस्पतिशुक्रयोः सरोषवचनानि, शुक्रस्य दैत्यान्प्रतिशापः, गुरुणा दैत्यान्प्रति धर्मभ्रंशकरोपदेशदानम्, बृहस्पतिसाहाय्यार्थं विष्णुनामायामोहसमुत्पादनम्, दिगंबरेण मायामोहेन दैत्यान्प्रति जैनधर्मोपदेशः, दानवानां मायामोहमोहितानां गुरुणा दिगंबरजैनधर्मदीक्षादानम्, गुरोः देवलोकंप्रति गमनोत्तरमिंद्रेण दैत्योपहासकरणम्, पुनः शुक्रेण दैत्यानां बोधनोत्तरं दैत्यानां त्रैलोक्यहरणोद्योगः. श्लोकांकाः ४१३ ॥ |

अ० प० विषयाः


१४— ३४ अर्जुनकर्णयोरुत्पत्तिकथनपुरःसरं वैरकारणकथनम्, तत्र शिवकृतशिरश्छेदक्रुद्धब्रह्मस्वेदात्पुरुषोत्पत्तिः, तस्माद्भीतस्य शिवस्य विष्णोः समीपेगमनं प्रार्थनाच, स्वेदजविरूपाक्षयाचितेन विष्णुना स्वदक्षिणभुजसमर्पणम्, विरूपाक्षेण विष्णुभुजच्छेदनोत्तरं तद्रक्तेनतस्य भिक्षापात्रपूर्तिः, मथ्यमानात्तद्रक्तात्पुरुषोत्पत्तिः, स्वेदजरक्तजयोः पुरुषयोर्युद्धवर्णनम्, विष्णवाज्ञया सूर्यशुक्राभ्यां तयो रक्षणपुरःसरं द्वापरांते पृथायां कर्णार्जुनरूपेणोत्पत्तिवर्णनम्. शिवकृतब्रह्मशिरश्छेदकारणम्, ब्रह्महत्याभीतशंकरकृतब्रह्मस्तोत्रवर्णनम्, ब्रह्माज्ञया शिवकृतविष्णुस्तोत्रम्, शिवं प्रति विष्णुना ब्रह्महत्याप्रायाश्चित्तकथनम्, शिवकृततीर्थक्षेत्रपर्यटनम्, पुष्करे शिवकृतकापालिकव्रतम्, ब्रह्मणा शिवाय वरप्रदानम्, कपालमोचनतीर्थस्योत्पत्तिः, संक्षेपतो वाराणसीक्षेत्रमाहात्म्यम्, शंकरस्य वाराणसीं प्रति गमनम्. श्लोकांकाः २१३ ॥

१५— ३७ मेरोरुपरि वैराजभवने कांतिमत्याख्यसभायां ब्रह्मदेवस्य चिंताकरणोत्तरं पृथिव्यां प्राक्स्थानं प्रति गत्वा तत्र वृक्षवरप्रदानप्रसंगेन तत्र वासवर्णनम्, विष्णुना सह सर्वदेवानां गमनम्, देवेभ्यो ब्रह्मणोपदेशकरणम्, पुष्करतीर्थोत्पत्तिकारणवर्णनम्, पुष्करक्षेत्रवासविधिवर्णनम्, त्रिविधभक्तिभेदवर्णनम्, पुष्करमरणनिवासफलम्, पुष्करस्थितानामाचारव्रतानुष्ठानवर्णनम्, ब्राह्मणानां लक्षणानि, आश्रमधर्मवर्णनम्. श्लोकांकाः ३९१ ॥

१६— ४४ ब्रह्मदेवकृतयज्ञवर्णनम्, तत्र ब्रह्मदेवकृतगोपकन्यारूपगायत्रीपरिणयनम्, तत्रेंद्रेण गोपकन्यानयनोत्तरं विष्णुसंमत्या ब्रह्मणा तत्परिणयनम्, ब्रह्मणा सहस्रयुगपर्यन्तयज्ञकरणम्. श्लोकांकाः १९१ ॥

१७— ४७ ब्रह्मदेवकृतयज्ञे शिवस्य भिक्षोद्देशेनागमनम्, सदस्यकृतोपहासक्रुद्धेन शिवेन कपालोद्धरणम्, तत्र भूयोभूयो भवनाश्चर्यम्, ब्रह्मरुद्रसंवादः, उपहासकरब्राह्मणेभ्यः शिवशापवर्णनम्, अन्येभ्यो वरप्रदानम्, गोपकन्यया सह यज्ञकृद्ब्रह्माणं प्रति सावित्रीकृतनिर्भर्त्सनम्, ब्रह्मणा सावित्रीसमीपे स्वापराधक्षमापनम्, ब्रह्मविष्ण्वादिदेवान्प्रति सावित्रीशापः, पर्वते सावित्र्या निर्गमनम्, विष्णुना सावित्रीस्तोत्रकरणम्, सावित्र्या विष्णवे वरदानम्, गायत्र्या ब्रह्मव्रतकथनम्, सावित्रीदत्तशापस्योच्छापकरणंच, गायत्र्या सर्वदेवेभ्यो देवीभ्यश्च वरप्रदानम्, रुद्रकृतगायत्रीस्तोत्रम्, गायत्र्या रुद्राय वरदानम्. श्लोकांकाः ३३१ ॥

१८— ५३ ब्रह्मदेवकृतयज्ञस्य विस्तरेण वर्णनम्, विष्णुदानववैरवर्णनम्, पुष्करस्नानादृषीणां मुख्यवैरूप्यनाशनपुरःसरं सुमुखत्वप्राप्तिः, प्राचीसरस्वतीचरित्रम्, तत्र मंकणकब्राह्मणस्य चरित्रम्, प्राचीसरस्वतीमाहात्म्यवर्णनम्, सर्वदेवप्रार्थनयावडवाग्निं गृहीत्वा नदीरूपेण सरस्वत्याःक्षारोदसमुद्रगमनेनान्तर्धानेन पुष्करं प्रति गमनम्, पुष्करस्यसरस्वतीमाहात्म्यम्, पुष्करक्षेत्रसंनिहितखर्जूरीवनेसरस्वत्युद्भवः, तस्या नंदाभिधानकरणे प्रभंजनराजकथानकम्, खर्जूरीवनान्नंदायागमनम्, सरस्वत्यां स्नानदानादिप्रशंसावर्णनम्. श्लोकांकाः ४७३ ॥

१९— ६१ ऋषिभिर्यज्ञोपवीतैः पुष्करस्य तीर्थविभागकरणम्, ब्रह्मणाऋषिभ्यो वरप्रदानम्, पुष्करक्षेत्रस्य माहात्म्यवर्णनम्, पुष्करस्थब्रह्मप्र्याद्याश्रमवर्णनम्, अगस्त्यप्रभावकथनम्, वृत्रासुरवधाश्रितकथानकम्, तत्र कालेयभीतदेवप्रार्थितब्रह्माज्ञया देवानां दध्यंचमृषिंप्रति प्रार्थना, दधीचा देवेभ्यो निजास्थिदानम्, तेनास्थ्ना वज्रनिर्माणम्, तेनवज्रेण शक्रेण वृत्रहननम्, वृत्रहत्याभीतस्य शक्रस्य सरःप्रवेशः, कालेयासुराणां देवत्रस्तानां समुद्रप्रवेशः, कालेयकृतोपद्रववर्णनम्, देवकृतविष्णुस्तोत्रम्, विष्ण्वाज्ञसदेवानामगस्त्याश्रमं गत्वागस्त्यप्रार्थनम्, अगस्त्येन विंध्यनामनवर्णनम्, अगस्त्यकृतसमुद्रप्राशनम्, देवकृतकालेयवधः, ब्रह्मणा भागीरथीकृतसमुद्रस्थल

| अ० | प० | विषयाः |
|---|---|---|
| | | पूरणस्यकथनम्, पुष्करक्षेत्रेश्राद्धादिविधिवर्णनम्, अवर्षणदुर्भिक्षत्रस्तऋषिभिर्मृतकुमारप्रेतपचने राज्ञःसंवादः, प्रतिग्रहदोषः,सुवर्णपूर्णौदुंबरदर्शने तद्ग्रहणविषये निषेधविषये च वासिष्ठप्रभृतिमुनीनामभिप्रायाः; शांतिप्रशंसावर्णनम्, द्रव्यसंग्रहतृष्णयोर्दोषः, संतोषप्रशंसा, कामदोषवर्णनम्, अप्रतिग्रहफलम्, बुभुक्षितानामवस्थावर्णनम्, अन्नप्रशंसा, अन्नदानस्य प्रशंसावर्णनम्, दमादिवर्णनम्, शांतस्य लक्षणानि, शांतिक्षमाप्रशंसा, मध्यपुष्करप्रशंसा. श्लोकांकाः ३६९॥ |
| २०—— | ६७ | मध्यपुष्करमाहात्म्यवर्णनम्, तत्र पुष्पवाहननृपत्याख्यानम्, विभूतिद्वादश्यादिषाष्टिव्रतलक्षणकथनम्, स्नानतर्पणादिविधिः. श्लोकांकाः११२॥ |
| २१—— | ७१ | धर्ममूर्तिराजकथानकम्, धान्यपर्वतादीनां दानविधिः,विशोकद्वादशीव्रतम्, गुडादिदशविधधेनुदानविधिः, धान्यादिदशविधशैलदानविधिः, सौरधर्मवर्णने विशोकशर्कराकमलमंदारशुभाख्यानां सप्तमीनां व्रतविधानादिवर्णनम्. श्लोकांकाः ३१९॥ |
| २२—— | ७६ | भूरादिसप्तलोकानामाधिपत्यप्राप्त्युपायवर्णनप्रसंगेऽग्निमारुतयोरिंद्रकृतसमुद्रशोषाज्ञाया अपरिपालनादिंद्रदत्तशापेन पृथिव्यां जन्मवर्णनम्, संक्षिप्ततयागस्त्यचरित्रवर्णने ब्रह्मादिकृतवरप्रदानम्, अगस्त्यार्घ्यदानविधिः, पार्वत्या शिवं प्रत्यात्मनःसावित्र्यपेक्षयाधिक्यप्राप्तिप्रश्ने शिवोक्तरससकल्याणिनीपापनाशिनीगौरीतृतीयाव्रतविधानम्, रुद्रस्य गौरीसभाश्वासनोत्तरं ब्रह्मणो यज्ञं प्रति गमनम्, रुद्रं प्रति स्वधर्मख्यापनाय विष्ण्वाज्ञा, सारस्वतव्रतविधानवर्णनम्. श्लोकांकाः ९४ ॥ |
| २३—— | ७९ | वैष्णवधर्मवर्णनम्, भीमस्यवैष्णवधर्मप्रवर्तकत्ववर्णनम्, माघशुक्लपक्षेभीमद्वादशीव्रतविधानवर्णनम्, वर्णाश्रमोत्पत्तिवर्णनम्, तत्र वेश्याधर्मवर्णनप्रस्तावे श्रीकृष्णपत्नीनांदाशोपभुक्तानां द्वारिकायां दाल्भ्यमहर्षिणा सह संवादे दाल्भ्येनसमुद्रमंथनसमुद्भूतवेश्याभ्योभगवदुक्तकल्याणिनीवेश्याव्रतविधानवर्णनम्. श्लोकांकाः १४२ ॥ |
| २४—— | ८२ | श्रावणकृष्णपक्षीयद्वितीयायामशून्यशयनव्रतविधानवर्णनम्, अंगारकचतुर्थीव्रतविधानम्, तत्रादौवीरभद्रस्यमंगलग्रहत्वप्राप्तिवर्णनपुरःसरंव्रतविधिवर्णनम्. श्लोकांकाः ६१ ॥ |
| २५—— | ८३ | आदित्यशयनव्रतविधानवर्णनम्, तत्रोमामहेश्वरार्चाप्रकारः. श्लो० ॥ ३७ ॥ |
| २६—— | ८४ | रोहिणीचंद्रशयनव्रतविधानम्. श्लोकांकाः ३१ ॥ |
| २७—— | ८४ | तटाकारामकूपवापीसरोवराविधानवर्णनम्. श्लो० ६० ॥ |
| २८—— | ८५ | वृक्षारोपणविधिवर्णनम्, तत्राश्वत्थादिवृक्षाणां पृथक्पृथक्फलवर्णनम्. श्लो० ॥ ३२ ॥ |
| २९—— | ८६ | सौभाग्यशयनव्रतविधानवर्णनम्, तत्रसौभाग्याष्टकोत्पत्तिकथनपुरःसरंललिताराधनविधानवर्णनम्. श्लो० ५८ ॥ |
| ३०—— | ८७ | पुष्करक्षेत्रेविष्णुपदपद्धतिकारणप्रश्नेवामनावतारचरित्रवर्णनम्, तत्र बाष्कलिदैत्यत्रस्तदेवप्रार्थितब्रह्मध्यातविष्णुना तद्भयनिवारणार्थमदितिगर्भप्रवेशेसत्यदित्यामुखान्निर्गतवाणीवर्णनम्, वामनोत्पत्तिसमारंभवर्णनम्, वामनस्य शुक्रेण सह बाष्कलिपुरंप्रतिगमनम्, तत्र वामनार्थेंद्रेणपादत्रयभूमियाचनायांबाष्कलींद्रसंवादः, वामनकृतबलिवंचनम्, बलेः पातालप्रवेशः. श्लोकांकाः २०२ ॥ |
| ३१—— | ९० | नागतीर्थवर्णनम्, तत्र ब्रह्मणा सर्पान्प्रति जनमेजयाद्दाहो भविष्यतीति शापदानम्, सर्पकृतप्रार्थनयाब्रह्मणा जरत्कन्यातनयादास्तीकाद्रक्षणं भविष्यतीत्युच्छापदानम्, पुष्करक्षेत्रे नागागमनतो नागतीर्थोत्पत्तिवर्णनम्, श्रावणपंचम्यां नागतीर्थे स्नानं श्राद्धादिमाहात्म्यम्, शिवदूतीचरित्रवर्णनम्, तत्र रुरुदैत्यत्रस्तदेवानां नीलगिरौतपःस्थितांदेवींप्रतिगमनम्, देवप्रार्थनयादेवीवदनादनेकदे- |

| अ० | प० | विषयाः |
| --- | --- | --- |
| | | वीनामुत्पत्तिः, देवीगणदैत्यगणयुद्धवर्णनम्, ततो देव्याः शिवदूत्याःपुष्करेदेवीगणैःसहस्थितौबुभुक्षितदेवीगणप्रेरणया शिवदूतीप्रेरितरुद्रकृतस्वरूपवच्छागवृषणकल्पिततद्भोजनप्रकारवर्णनम्, शिवकृतशिवदूतीस्तोत्रम्, शिवदूत्यारुद्राय वरदानम्, स्तोत्रमहिमाच. श्लो० १५४ ॥ |
| ३२ | ९३ | प्रेतपंचककथानकम्, तत्र पृथुब्राह्मणस्यपुष्करक्षेत्रेपंचप्रेतैः सहसमागमे पृथुनाप्रेतत्वनिवर्तककर्मकथनम्, प्रेतत्वकरकर्मकथनम्, पृथुसंभाषणात्प्रेतमुक्तिः, पंचप्रेतकथाफलम्, अंतरिक्षपुष्करास्थितौदाक्षिणापथस्थमहर्षिप्रार्थनया तस्यभूमावागमनम्, पुष्करेस्नानाद्यर्थंकार्तिकीपौर्णिमादिप्रशस्तयोगवर्णनम्, उदुंबरवनादिभ्यःप्रादुर्भूतयासरस्वत्यःपुष्करतीर्थपूरणम्, सरस्वत्याः पंचस्रोतोभिधानम्, सरस्वतीतीरमाहात्म्यवर्णनम्, सरस्वत्याः प्राङ्मुखत्वेकारणवर्णनम्, पुनःपश्चिमायांगमनम्. शुद्धावटतीर्थमाहात्म्यम्, प्राचीनेश्वरदेवाग्रतआदितीर्थमाहात्म्यम्; ब्रह्मादिभिरनेकसखीसमुत्पत्तिपुरःसरंताभिः सहसरस्वत्याः पश्चिमायां गमनम्. श्लो० १५६ ॥ |
| ३३ | ९६ | मार्कंडेयोत्पत्तिकथानकवर्णनम्, पुष्करक्षेत्रसमीपेमार्कंडेयाश्रमवर्णनम्, अवियोगवापींप्रतिरामचंद्रस्यगमनेमार्कंडेयेनसहसमागमः, मार्कंडेयाश्रमेरामस्यस्वप्ने दशरथदर्शनम्, ऋष्याज्ञयारामेणश्राद्धकरणम्, श्राद्धेसमागतानांद्विजानामंगे सीतायाः प्रत्यक्षंदशरथदर्शनाल्लज्जाकारणकथनम्, रामादीनांज्येष्ठपुष्करेगमनपूर्वकंमासपर्यंतंस्थितिः, तत्रलक्ष्मणस्यमतिविपर्ययाल्लक्ष्मणकृतविरोधवर्णनम्, अजगंधशिवंप्रतिरामादीनांगमनेरामकृताजगंधशिवस्तोत्रवर्णनम्, अजगंधरुद्रकृतरामप्रशंसा, लक्ष्मणस्यपश्चात्तापेरामेणपुष्करक्षेत्रस्थजनानांमतिवैपरीत्यपुरःसरस्वार्थतत्परतावर्णनम्. श्लो० १८५ ॥ |
| ३४ | ९९ | ब्रह्मकृतयज्ञकालर्त्विग्दक्षिणादिसर्वकृत्यवर्णनम्, ब्रह्माज्ञयालक्ष्मीसहितविष्णुनासावित्रीमोहनम्, गौर्यासहाशिवेनसावित्रीप्रार्थनम्, सावित्र्याब्रह्मसमीपंप्रत्यागमनम्; गायत्रीसावित्र्योःसंवादः, यज्ञांतस्नानेब्रह्मणासर्वदेवेभ्योवरप्रदानम्, विष्णुकृतब्रह्मस्तुतिः, रुद्रकृतब्रह्मस्तोत्रम्, ब्रह्मणास्वस्यनिवासस्थानकथनम्, ब्रह्मस्थानमाहात्म्यवर्णनम्, पुष्करादितीर्थेविविधदानमहिमा, पुष्करेगुरुदीक्षादिसविस्तरविधिवर्णनम्, ग्रहाणांसौम्यत्वकरणोपायविधिः, श्वेतराजकथानकप्रसंगेननानाविधदानादिमहिमा. श्लो० ४१८ ॥ |
| ३५ | १०६ | अन्नदानमाहात्म्यवर्णनप्रस्तावाद्रामकथानकवर्णनम्, तत्र रामेणरावणंनिहत्यराज्यशासनेक्रियमाणेऽगस्त्यादिकृतप्रशंसनम्, रामेणभीमनामकतपस्विशूद्रापचारान्मृतस्यब्राह्मणपुत्रस्यसंजीवनार्थं भीमशूद्रंहत्वाब्राह्मणबालसंजीवनम्. श्लो० १०० ॥ |
| ३६ | १०८ | रामस्यागस्त्याश्रमंप्रतिगमनम्, रामागस्त्यसंवादः, प्रतिग्रहविषयविवेके अक्षयराजकथानकम्, अगस्त्यदत्ताभरणस्यरामेणग्रहणम्, अगस्त्यस्यआभरणरत्नादिप्राप्तिप्रश्नेऽगस्त्येनश्वेतराज्ञोनिजशवभक्षणप्रभृतिवृत्तांतनिवेदनपुरःसरसंवादवर्णनम्, अगस्त्येनश्वेतराज्ञःसकाशाद्रत्नकंकणप्रतिग्रहवर्णनम्. श्लो० १३१ ॥ |
| ३७ | ११० | दंडकारण्योत्पत्तिवर्णनेदण्डराजकथानकम्, रामस्यसंध्योपासनादि, गृध्रोलूकयोर्गृहविषयकविवादेरामकृतनिर्णयवर्णनम्, गृध्रस्यपूर्वजन्मवृत्तांतः, रामस्यायोध्यांप्रत्यागमनोत्तरंराजसूययज्ञविषयकविचारेप्रस्तूयमानेभरतेनयुक्त्यातस्मान्निवर्तनम्, रामस्यकान्यकुब्जेवामनस्थापनप्रतिज्ञा. श्लो० १७१ ॥ |
| ३८ | ११३ | विभीषणवृत्तजिज्ञासया भरतेनसह विमानमारुह्य रामचंद्रस्यदक्षिणापथगमनम्, तत्र च भरतपुत्रराष्ट्रनिरीक्षणानंतरं दक्षिणस्यां दिशि पूर्वं वनवाससमयेऽ |

| अ० प० | विषयाः |
|---|---|
| | ध्युषितस्थलानां भरताय दर्शनम्, किष्किंधायां सुग्रीवादिसंगमः , ततः सुग्रीवं गृहीत्वा लंकां प्रति गमने समुद्रतीरादिप्रदेशेषुवृत्तवृत्तांतवर्णनम्, लंकायां विभीषणसंगमः, चतुर्थे दिवसे केकसीनाम्न्या विभीषणमातृ रामदर्शने केकसीरामसंवादः, सरमारामसंवादः, रामेण विभीषणाय नीतिशिक्षणम्, विभीषणेन रामाय नानालंकारसमेतश्रीवामनमूर्तिसमर्पणम्, रामेण तां मूर्तिंगृहीत्वा विमाने स्थापयित्वाऽयोध्याभिमुखं गमनावसरे विभीषणप्रार्थनया समुद्रनिवद्धसेतोस्त्रिधा भंगकरणम्, रामेश्वरमहादेवस्य श्रीरामकृतस्तुतिः, शिवरामयोः संवादः, पुष्करे विमानप्रतिवंधे जायमाने सुग्रीवेण प्रतिबंधककारणान्वेषणे विमानादुत्तीर्य श्रीरामेण ब्रह्मस्तवनम्, ब्रह्मरामसंवादः, ततो मथुरायां शत्रुघ्नराज्ये गमनम्, ततो महोदयपर्वणि गंगातीरे वामनं प्रतिष्ठाप्य तस्य द्रव्येण वृत्तिं कल्पयित्वा सुग्रीवस्य किष्किंधां प्रति प्रेषणम्, इत्थं वामनप्रतिष्ठावर्णनम्. श्लो० १९४ ॥ |
| ३९—११६ | भीष्मस्य पुलस्त्यं प्रति विष्णोर्नाभिपद्मोत्पत्तिपूर्वकं जगत्सृष्टिविषयः प्रश्नकरणम् पुलस्त्येन सृष्टिवर्णने प्रस्तूयमाने परब्रह्मतत्त्वनिर्देशपुरःसरं कृतादियुगतत्कालसंध्यंशादियुगधर्मादिसृष्टितत्संहारवर्णनम्, संहारकालीनभगवत्स्थितिवर्णनम्,एकार्णवे प्रसुप्तस्य भगवतो मुखं प्रविष्टेन मार्कंडेयमुनिना भगवतो जठरेऽनेकविधप्रपंचदर्शनम्, भगवता सह मार्कंडेयस्य संवादे भगवतास्वात्मनो माहात्म्यवर्णनम्, ततः परमेश्वराद्भूतसंभवः पद्मसंभवश्च. श्लो० १५४ ॥ |
| ४०—११९ | पद्ममध्याद्ब्रह्मण उत्पत्तिकथनम्, पद्मस्य पृथिवीत्ववर्णनपूर्वकं पद्मकेसराणां हिमवदादिपर्वतत्वम्, पद्मपत्रानुसारेण देशवर्णनम्, मधुकैटभोत्पत्तिः, मधुकैटभविनाशकथनम्, कपिलयोगाचार्योत्पत्तिपूर्वकदक्षादिप्रजापत्युत्पत्तिवर्णनम्, प्रजापतिभ्यः सकाशात्प्राजापत्यानामुत्पत्तिः, तारकामयसंग्रामवर्णनम्.श्लो० १९६॥ |
| ४१—१२२ | देवसैन्यानां तारकासुरसैन्यैः सह तुमुलयुद्धे संप्रवृत्ते उर्वस्योरोः सकाशादौर्वानलोत्पत्तिकथानकवर्णनपुरःसरं कालनेमिवधवर्णनम्, कालनेमिप्रमुखदैत्यवधानंतरं ब्रह्मकृतविष्णुस्तुतिः, विष्णुनेंद्रादिभ्यो वरदानादिपूर्वकब्रह्मलोकगमनवर्णनम्. श्लो० ३२० ॥ |
| ४२—१२७ | शंकरमाहात्म्यवर्णनारंभः, तत्र दित्या वज्रांगपुत्रोत्पत्तिः, वज्रांगेन दित्याज्ञयेंद्रं बद्ध्वा मातुः समीपं प्रत्यानयनोत्तरं ब्रह्मकश्यपवचनादिंद्रमोचनम्, ब्रह्मणा तदर्थं वरांगीनामकन्यामुत्पाद्य वज्रांगायपत्न्यर्थे कन्यादानम्, वज्रांगस्य वरांग्या सह तपोवनं गत्वा तत्र ब्रह्मणः प्रीतये तपश्चरणम्, तत्तपस्तुष्टेन ब्रह्मणा तस्मै वरप्रदानम्, इंद्रत्रस्तायां वरांग्यां वज्रांगात्तारकासुरोत्पत्तिः, तपस्विनेतारकासुराय ब्रह्मणा वरप्रदानम्, तारकासुरस्य देवैः सह महायुद्धम्, तत्र देवानां पराजयवर्णनम्. श्लो० १११ ॥ |
| ४३—१२९ | इन्द्रविटंबना,सवेदवकृतब्रह्मस्तोत्रम्, ततो ब्रह्मणा शंकरसुतात्तारकासुरवधं कथयित्वा रात्रिदेवींप्रति शंकरसुरतभंगविषयेऽनुज्ञाकरणपुरःसरं वरप्रदानम,हिमाचलपत्न्यां मेनायां पार्वतीजन्मकथनानंतरं नारदेन पार्वत्याः सामुद्रिकलक्षणस्पष्टीकरणम्, देवराजाज्ञप्तमदनविद्धमहेश्वरकृतमदनदाहः, रतिकृतमहेशस्तोत्रम्, महेशेन मदनस्यानंगत्ववरदानम्, पार्वतीकृततपश्चर्या, ऋषिपार्वतीसंवादे शंकरेतरंपतिं न करिष्यामीति पार्वतीप्रतिज्ञा, शिवपार्वतीविवाहः, गणेशवर्णनम, वीरकगणस्य पार्वत्या पुत्रीकरणम्, पार्वतीशरीरे ब्रह्माज्ञप्तरात्र्याःप्रवेशः, पार्वत्याअसितांगत्ववर्णनम्. श्लो० ५१६ ॥ |
| ४४—१३९ | कृष्णवर्णायाः पार्वत्याः शंकरेण विनोदकरणम्,पार्वत्या शंकरभर्त्सना, शिवकृतभर्त्सनारुष्टायाः पार्वत्या हिमाचलं प्रति गमनम्, वीरकगणस्यद्वाररक्षार्थनियो |

अ॰ प॰ विषयाः

जनम्, शिवंमत्याडिदैत्यस्यपार्वतीरूपंधृत्वायोनौवज्रदंतं प्रवेश्य वीरकगणं सर्परूपेणवंचयित्वा गमनम्, तस्य पार्वतीरूपधरस्याडिदैत्यस्यवामपार्श्वेपार्वती-वामपार्श्ववत्पद्मचिह्नमनिरीक्ष्य पार्वत्यभावं निर्णीयशिवकृताडिदैत्यवधः, वायुमुखाच्छिवस्मपारदारिकत्वश्रवणतः क्रुद्धयातपःस्थितयापार्वत्याद्वारपालननियुक्त-वीरकगणशापदानम्, क्रोधेनसिंहोत्पत्तिः, तन्मुखं प्रति प्रवेष्टुकामायाःपार्वत्या ब्रह्मणाविर्भूयनिवारणम्, ब्रह्मवरेण पार्वत्या निजदेहकार्ष्ण्यकररात्रित्यागः, रात्रिदेव्याश्चब्रह्मणा एकानंशेति कौशिकीति च नामकरणपूर्वकं विंध्याद्रिं प्रति-प्रेषणम्, स्वमंदिरं प्रति प्राप्तायाः पार्वत्या वीरकेण निवारणे पार्वतीकृतवीरक शापपश्चात्तापः, वीरकगणकृतपार्वतीस्तोत्रम्, पार्वतीशिवसमागमः, कार्तिकेयोत्पत्तिवर्णनम्, देवकृतकार्तिकेयस्तुतिः, कार्तिकेयकृततारकासुरवधः. श्लो॰ २१८ ॥

४५—१४२ श्रीनृसिंहावतारवर्णनम्. तत्र हिरण्यकशिपुसभास्थानवर्णनम्, नृसिंहहिरण्यकशिपुयुद्धे महोत्पातवर्णनम्, नरहरिणा हिरण्यकशिपुविदारणम्, ब्रह्मकृतनरहरिस्तुतिः, क्षीरोदोत्तरकूलेभगवता नृसिंहरूपं स्थापयित्वास्वस्थानंप्रति गमनवर्णनम्. श्लो॰ ११७ ॥

४६—१४६ अंधकासुरकथानकम्. तत्र शिवकृतादित्यस्तुतिः, अंधककृतं शिवस्तोत्रम्, अंधकासुरस्य गणत्वप्राप्तिः, ब्रह्मकथितासंवादे ब्राह्मणानां प्रशस्तिः, ब्राह्मणलक्षणक थनम्, गायत्रीमाहात्म्यम्, गायत्रीजपविधिः, गायत्रीजपफलवर्णनम्. श्लो॰ २०८ ॥

४७—१५० अधमब्राह्मणलक्षणम्, पंचविधस्नानानि, अधमब्राह्मणवधेऽपिपापकथनम्, नष्टब्राह्मण्यपुनःप्राप्तिवर्णनम्, तत्रैकस्यब्राह्मणपुत्रस्यकथा, तत्प्रसंगेन गरुडकथानकम्, प्रतिदिक्षु यवनोत्पत्तिवर्णनम्, यवनानामस्पृश्यत्वेऽपि कलौ यवनस्पर्शं करिष्यंतीति वर्णनम्, गरुडाय विष्णुदत्तवरदानादिप्रसंगवर्णनम्, मात्राज्ञया गरुडेनेंद्रं पराजित्य स्वर्गादमृतानयनम्, कद्रूवै पीयूषं दत्त्वा मातुर्विनतादासीत्वान्मोचनम्, इंद्रेण कद्र्वाः सकाशादमृताहरणम्. श्लो॰ १७३ ॥

४८—१५३ कश्यपोपदेशेन चांडालपतितद्विजस्य सदाचाराचरणेन स्वर्गप्राप्तिः, ब्राह्मणपीडनादौ नानाविधदुःखप्राप्तिवर्णनम्. आततायादिब्राह्मणवधेऽपापत्वम्, ब्राह्मणानामुपजीव्यवृत्तिवर्णनम्, स्ववृत्त्योपजीवनाभावे क्षत्रियादिवृत्त्यधिकारकथनम्, तुलायामसत्यकरणे नरकवणनम्, सत्यस्य स्तुतिः, वाणिज्यकष्टलब्धधनस्य दानेनाक्षयत्वप्राप्तिः, वैश्यवृत्त्योपजीवनाभावेकृपिकर्मतदाचारवर्णनम्, ब्रह्मणो मुखाद्वेदाग्निगोद्विजोत्पत्तिवर्णनपुरःसरं गोमाहात्म्यम्, गोपूजाविधिः, कपिलादि गोदानविधिः, गोदानस्य फलम्. श्लो॰ १९५ ॥

४९—१५६ ब्रह्मतेजोवर्द्धनार्थकनित्यकर्मवर्णनम्, स्वर्गागतानां नरकागतानां च नराणां लक्षणम्, धर्मबीजपापबीजप्रसूतनरलक्षणम्. श्लो॰ १३४ ॥

५०—१५८ पित्रर्चाप्रशंसायां मूकाख्यानम्, पित्रनादरेकृतेसति पापम्, पत्यर्चाप्रशंसायां पतिव्रताख्यानम्, पतिव्रतालक्षणवर्णनम्, सर्वजनसमत्वप्रशंसायां तुलाधारकथानकम्, मित्राद्रोहप्रशंसायामद्रोहककथानकम्, विष्णुभक्तिप्रशंसायां वैष्णवाख्यानम्, पुत्रस्यकर्तव्यनिरूपणम्, श्राद्धस्यमाहात्म्यं फलं च, वाराणस्यादि क्षेत्रेषु श्राद्धस्यविशेषफलकथनम्, पर्वविशेषेषु श्राद्धविधिः, नांदीश्राद्धविधिः, गणेशस्याग्रपूजावर्णनम्, चूडामणियोगवर्णनम्, पितुः पुत्रेणकर्तव्यवर्णनम्, मृतस्यप्रथमादिदिनकर्तव्यकर्मनिर्णयः, आशौचकालनिर्णयः श्राद्धप्रशंसा, श्राद्धासमर्थस्य कर्तव्यनिर्णयः. श्लो॰ ३१३ ॥

| अ० प० | विषयाः |
|---|---|
| ५१—१६४ | पतिव्रतामाहात्म्यवर्णनम्, तत्रसैव्यापतिव्रतायाः पतिशुश्रूषाकथानकम्, माण्डव्यमुनिकथा, सूर्यानुदयवित्रस्तब्रह्मादिदेवैस्तस्याः सांत्वनपूर्वकं तत्पतेःकामसुंदररूपवरप्रदानाश्वासनात्तया सैव्यया सूर्योदयायानुमोदनम्, सूर्योदयः, तत्पतेरुज्जीवनम्, पतिव्रतामाहात्म्यश्रवणपठनफलम्. श्लो० ८८ ॥ |
| ५२—१६५ | माण्डव्यस्यशूलारोपणे पतिव्रतापतेः कुष्ठप्राप्तौचकारणवर्णनम्. दुष्टस्त्रीदोषवर्णनम्, कुलहीनस्त्रीविवाहनिषेधः, पतिव्रतास्त्रीत्यागेन निरयः, रजस्वलादिगमनेनरकः, अगम्यागमनेदोषः, पत्यासहगमनविषयेनिर्णयः, विधवाधर्माः, कन्यादानविधिफलवर्णनम्, शुल्कग्रहणनिषेधः, अपात्रवराय कन्यादानेदोषः, दासीदानविधिः. श्लो० १०३ ॥ |
| ५३—१६७ | तुलाधारचरित्रम्, सत्यस्यप्रशंसा, निर्लोभत्वप्रशंसायां शूद्रकथानकम्, वित्तकामदयासंतोषालोभाहिंसाप्रशंसावर्णनम्. श्लो० ७७ ॥ |
| ५४—१६८ | कामस्यदुर्जयत्वकथनेऽहल्येंद्रचरित्रम्. श्लो० ५१ ॥ |
| ५५—१६९ | कामदुर्जयत्वकथने परमहंसचरित्रम्, ब्रह्मणोरेतसः सकाशाद्लौहित्यस्योत्पत्तिपूर्वकं तीर्थराजत्ववर्णनम्, लौहित्यतीर्थे परशुरामस्य स्नानमात्रेण क्षत्रवधजनितपापक्षालनम्. श्लो० ५६ ॥ |
| ५६—१७० | कामाख्याने गंधर्वादिस्त्रीभिः सहशिवक्रीडा, क्षेमंकर्याख्यानम्, मूकादीनां वैकुण्ठागमनकथनम, पंचाख्यानसमाप्तिवर्णनम्. श्लो० ४५ ॥ |
| ५७—१७१ | जलदानमाहात्म्यवर्णनम्, निर्जलदेशेपुखातादिफलम्, जलदानविषयेधनिसुतकथानकम्. श्लो० ४६ ॥ |
| ५८—१७२ | अश्वत्थादिवृक्षरोपणविधानफलवर्णनम्, प्रपाविधिः, धर्मघटदानविधिः. श्लो० ५६ ॥ |
| ५९—१७३ | सेतुबंधनफलम्, पङ्कादौ निर्गमाय पाषाणादिमार्गकरणफलम्, कंटकादिविद्धदुर्मार्गशोधनफलम्, तत्राख्यानफलम्. गोप्रचारफलम्, गोचारविघ्नकरस्य दण्ड्यत्ववर्णनम्, विष्ण्वादिदेवताप्रासादकरणफलम्, दीपाद्यनेकदानानि, देवलकवृत्तिवर्णनम्, स्वयंभूलिंगार्चनफलम्, देवमंडपकरणफलम्, श्रोत्रियगृहनिर्माणफलम्, रुद्राक्षमाहात्म्यवर्णनपुरःसरं रुद्राक्षधारणविधिफलवर्णनम्, तत्ररुद्राक्षोत्पत्तिविषयकाख्यायिकाकथनम्. श्लो० २११ ॥ |
| ६०—१७६ | धात्रीमाहात्म्यवर्णनम्, तत्रामलकीस्नानधात्रीफलभक्षणफलवर्णनम्, वारादिविशेषेणधात्रीफलभक्षणनिषेधः, प्रेताख्यायिका, तुलसीमाहात्म्यवर्णनम्. श्लो० १४२ ॥ |
| ६१—१७९ | तुलसीस्तोत्रवर्णनम्. श्लो० ४३ ॥ |
| ६२—१७९ | गङ्गामाहात्म्यकथनम्, तत्रगङ्गायांस्नानादिविधिवर्णनम्, गङ्गायाभुव्यागमनपूर्वकत्रिस्रोतस्त्वकारणवर्णनम्. श्लो० १२५ ॥ |
| ६३—१८२ | गणपतेरग्रपूज्यतावर्णनम, तत्रपार्वतीप्रेमकथा, गणेशद्वादशनामस्तोत्रम्. श्लो० ३१ ॥ |
| ६४—१८२ | गणपतेरन्यत्स्तोत्रम्. श्लो० ११ ॥ |
| ६५—१८२ | नांदीमुखादिषु प्रथमं गणेशपूजनवर्णनम्, गणेशपूजाविधिः, गणेशस्याग्रपूजायाअकरणाद्देवासुरसंग्रामे देवानांपराजयेदेवानांशंकरसमीपंप्रत्यागमनम, शंकरोपदेशेन देवैर्गणेशस्तोत्रपूर्वकपूजाकरणम, देवेभ्योगणेशेन वरप्रदानम्, गणेशाज्ञया देवानांविष्णुंप्रतिगमनम, विष्ण्वाज्ञयादेवानामसुरैःसहसंग्रामे चित्ररथकृतकालेयवध. श्लो० १२० ॥ |
| ६६—१८४ | जयंतेन कालेयवधः. श्लो० १९ ॥ |

अ० प० विषयाः

६७—१८५ इंद्रेणबलनमुचिवधः. श्लो० ५१ ॥
६८—१८६ इंद्रेणनमुचिवधः. श्लो० ९ ॥
६९—१८६ षडाननेन तारेयवधः. श्लो० २३ ॥
७०—१८७ यमेनदेवांतकदुर्धर्षदुर्मुखवधः. श्लो० २१ ॥
७१—१८७ इंद्रेण अन्यनमुचिवधः. श्लो० २८ ॥
७२—१८७ विष्णुनामधुदैत्यवधः. श्लो० ३७ ॥
७३—१८८ इंद्रेण वृत्रासुरवधः. श्लो० ४० ॥
७४—१८८ गणेशेन त्रैपुरिवधः. श्लो० ४५ ॥
७५—१८९ देवदैत्यानांद्वंद्वयुद्धम्, तत्रहिरण्याक्षपराजितदेवप्रार्थनया विष्णोर्हिरण्याक्षेण सहयुद्धम्, हिरण्याक्षस्यपातालगमने विष्णुनावाराहरूपंधृत्वा हिरण्याक्षस्यवधकरणम्, देवकृतविष्णुविजयस्तोत्रम्. श्लो० १०२ ॥
७६—१९१ रणेमृतानां दैत्यानामुत्तमगतिप्राप्तिः, रणपराङ्मुखानांचनीचगतिप्राप्तिवर्णनम्, मनुष्ययोनिगतदैत्यानांस्वभावतोदैत्यत्ववर्णनम्, दैत्यवंश्यानामपि प्रह्लादादीनांसौम्यस्वभावत्वपूर्वकदेवत्वप्राप्तिवर्णनम्, एकेनापिवैष्णवपुत्रेण कोटिकुलोद्धारवर्णनप्रसंग आख्यायिका, मनुष्येष्ववतीर्णानां देवानांलक्षणानि, मनुष्येष्ववतीर्णानांकर्णादीनां दैत्यत्ववर्णनम्, भीष्मद्रोणाश्वत्थामकृपणधर्मभीमार्जुननकुलसहदेवगान्धारीकुन्तीद्रौपदीनां देवत्वम्, पृथिव्युद्धारकपृथिवीक्षयकृतांच लक्षणवर्णनम्. श्लो० १४२ ॥
७७—१९३ सूर्यमाहात्म्यवर्णनम्, तत्रसूर्यदर्शनात्पातकनिरसनम्, संक्रान्त्यादिषु दानादिविधिः, तुलाद्यनेकदानानि, सूर्यव्रतानि, अर्कसप्तमीव्रतविधिः. श्लो० १०५ ॥
७८—१९५ सूर्यस्यानेकव्रतवर्णनम्, सूर्यस्तोत्रम्. श्लो० ६५ ॥

अ० प० विषयाः

७९—१९६ सूर्यमाहात्म्यप्रसंगाद्भद्रेश्वरनामकमध्यदेशनृपतिकथानकम्. श्लो० ३७ ॥
८०—१९६ सूर्यपूजाविधिः, सोमस्यच पूजाविधिः, चंद्रार्थदानानि. श्लो० २९ ॥
८१—१९७ शंभोःसकाशाद्भौमग्रहस्योत्पत्तिवर्णनम्, अंगारकचतुर्थ्यां भौमपूजनविधिवर्णनम्. श्लो० ४९ ॥
८२—१९८ बुधगुरुशुक्रशनिराहुकेतूनांपूजाविधिवर्णनम्, नवग्रहमंत्राः, कृतत्रेताद्वापर-कलियुगानुक्रमेण तपोज्ञानयज्ञदानानांप्रशंसा, अभयदानस्य सर्वदानापेक्षया महत्त्वम्, शूद्रस्यमुख्यत्वेनदान वर्णनम्, पद्मपुराणसृष्टिखण्डपठनश्रवणफ-लम्. श्लो० ४५ ॥

इति पद्मपुराणांतर्गतसृष्टिखण्डस्यविषयानुक्रमणिका
संपूर्णा ॥ १ ॥

---

## ॥ अथ द्वितीयभूमिखण्डस्थविषयानुक्रमणिका ॥

१— १ ऋषीणांसूतंप्रति प्रह्लादचरित्रजिज्ञासया प्रश्नः, सूतेन सर्वानृषीन्प्रति ब्रह्मव्याससंवादवर्णनम्, ब्रह्मव्याससंवादे शिवशर्मब्राह्मणाख्यानवर्णनम्, शिवशर्मणापुत्रपरीक्षणवर्णनम्. तत्र माययापत्नीमरणेएकपुत्रद्वारातस्याःखण्डकरणम्, द्वितीयपुत्रद्वारामायाकल्पितान्यस्थ्यानयनम्. श्लो० ५८ ॥
२— २ तृतीयपुत्रद्वारा मृतपुत्रसंजीवनम्, चतुर्थपुत्रायस्वर्गलोकादमृतानयनायाज्ञाकरणम्. श्लो० २७ ॥
३— २ इंद्रलोकं प्रतिगच्छतःशिवशर्मपुत्रस्य विष्णुशर्मणोमध्येमार्गमिंद्रप्रेरणया मे-

अ० प० विषयाः

निकाकृतविघ्नज्ञानम्, मेनिकानिराशीकरणम्, इंद्रकृतानेकविघ्नभस्मीकरणपूर्वकमिंद्रं प्रति शापदानायोद्यमः, शापभयभीतेनेंद्रेणविष्णुशर्मणेऽमृतकुंभदानम्, कुंभमादायविष्णुशर्मणः पितरंप्रत्यागमनम्, शिवशर्मणा मायागोपितपत्न्या उज्जीवनमिषेण प्रकटीकरणम्, मातापितृसंतोषात्सुतानां तेषां चतुर्णामपि दाहवर्जितगोलोकप्राप्तिवर्णनम्. श्लो० ७२ ॥

४—— ३ शिवशर्मद्विजेन कनिष्ठपुत्रस्यसोमशर्मणः सत्वपरीक्षणम्. तत्र सोमशर्मणः समीपेकुंभंदत्वातीर्थयात्रामिषेणबहिर्गत्वादशवर्षपर्यंतं पत्न्यासहतपश्चरित्वामायया ऽऽत्मनः पत्न्याश्वशरीरंकुष्ठरोगग्रस्तं विधायपुत्रसमीपंप्रत्यागमनम्, सोमशर्मणा गृहागतमातापितृशरीरशुश्रूषणेन नानाविधक्लेशसहनम्, पित्राऽमृतकुण्डस्थामृतमपहृत्य पुत्रंप्रतिपूर्वं स्वदत्तामृतकुंडयाचनम्, पुत्रेणरिक्तकुंभंदृष्ट्वा स्वतपोबलेन तस्मिन्नमृतमापूर्य पितुःसमीपंप्रत्यानयनम्. श्लो० ६० ॥

५—— ५ शिवशर्मकृता पुत्रप्रशंसा, शिवशर्मणः सभार्यस्यविष्णुलोकावाप्तिः, सोमशर्मणः शालिग्रामक्षेत्रेतपस्तपतो दैत्यभयेनमरणोत्तरं प्रह्लाददैत्यत्वप्राप्तिवर्णनम्, प्रह्लादस्य वासुदेवेनसह युद्धे मरणम्, प्रह्लादहननेकमलानामतन्मातृरोदनम्, नारदेनकमलायाःसांत्वनम्, प्रह्लादस्येंद्रत्वप्राप्तिप्रभृतिचरितस्यसंक्षेपतोवर्णनम्, देवादिप्रार्थनयावासुदेवनेदेवान्प्रति इंद्रो भविष्यतीतिकथनम्, कश्यपाददित्यामिंद्रोत्पत्तिः, इंद्राभिषेकः. श्लो० १११ ॥

६—— ६ इंद्रस्यस्वाराज्यश्रियंदृष्ट्वा दनुदुःखम्, दित्याविलापकरणं च, कश्यपेनदिति सांत्वनम्. श्लो० ३३ ॥

७—— ७ कश्यपेनदित्यैपंचमहाभूतेंद्रियैः सहात्मनोमैत्र्या ज्ञानविवेकतिरस्कारपूर्वकंतैः सहगर्भागारं प्रतिप्रवेशवर्णनम्. श्लो० ८३ ॥

अ० प० विषयाः

८—— ९ देहदुःखानुभवोद्विग्नस्यात्मनो वैराग्येणसहसमागमः, वैराग्यस्यात्मनासहसंवादः, वीतरागोपदेशेनात्मनोविवेकप्रसंगः, विवेकद्वाराज्ञानसमागमः, ज्ञानिनात्मानंप्रतिस्वस्यप्राक्तनस्वरूपवर्णनम्, ध्यानादिसमाश्रये ज्ञानेनात्मन उपदेशकरणम्. श्लो० १०५ ॥

९—— १० ध्यानाश्रयेणात्मनो देहबंधविनिर्मुक्तिपुरःसरंस्वरूपावगतिवर्णनम्. कश्यपेनेत्थमात्मोपदेशेनदित्याः सांत्वनम्. श्लो० २० ॥

१०—— ११ हिरण्यकशिप्वादिदैत्यानांपितरं कश्यपंप्रत्यागत्य स्वकष्टविनिवेदनम्, कश्यपेनतान्प्रति देवानां जयकारणवर्णनम्, दैत्यान्प्रति कश्यपेन तपस्याकरणायाज्ञाकरणम्, बलिप्रभृतिदैत्यानां परस्परं मंत्रं कृत्वा तपःकरणम्. श्लो० ५० ॥

११—— १२ सुव्रतचरित्रवर्णनम्. तत्र रेवातीरवर्तिवामनक्षेत्रवासिसोमशर्मब्राह्मणाय तस्य पत्न्यासुमनानाम्न्यासांसारिकदुःखप्रदर्शनोपदेशकरणपुरःसरं ऋणसंबंध्यादिचतुर्विधपुत्राणां लक्षणवर्णने प्रथमंन्यासापहारकपुत्रलक्षणकथनम्. श्लो० ४६ ॥

१२—— १२ ऋणसंबंधिपुत्रलक्षणवर्णनम्, रिपुपुत्रलक्षणम्, लाभप्रदपुत्रलक्षणम्, उदासीनपुत्रलक्षणम्, सुमनयेत्थंपुत्रलक्षणकथनोत्तरं पतिसांत्वनम्, पत्युःसोमशर्मणः पुत्रप्राप्तयेऽत्युत्कटेच्छांदृष्ट्वा सुमनयापत्येपुत्रप्रशंसापूर्वकं धर्माख्यानकथनेदुर्वासआख्यायिकावर्णनम्, दुर्वाससाधर्मस्य राजत्वदासीपुत्रत्वचाण्डालत्वरूपशापदानम्, दुर्वाससःशापेनधर्मस्य त्रिविधावतारवर्णनम्. श्लो० १२८ ॥

१३—— १४ ब्रह्मचर्यतपःसत्यदाननियमक्षमाशौचाहिंसाशांत्यस्तेयदमशुश्रूषाणां लक्षणानि. श्लो० ३५ ॥

१४—— १५ सोमशर्मप्रश्नोत्तरं सुमनया स्ववृत्तांतनिरूपणम्, धर्ममृत्युलक्षणवर्णनम्. श्लो० ४७ ॥

अ० प० विषयाः

१५— १६ पापिमरणलक्षणवर्णनम्. श्लो० २२ ॥

१६— १६ पापिनांमरणोत्तरं नानाविधक्लेशयोनिवर्णनम्. श्लो० २१ ॥

१७— १७ सुमनोपदेशेन सोमशर्मणः पुत्रप्राप्त्युपायजिज्ञासयावसिष्ठंप्रति गमनम्, वसिष्ठसोमशर्मसंवादेवसिष्ठेन सोमशर्मणः पूर्वजन्मवृत्तांतवर्णनम्. श्लो० ५८ ॥

१८— १८ सोमशर्मणोब्राह्मणत्वकारणवर्णनम्, वसिष्ठोपदेशात्सोमशर्मणा गृहंप्रत्यागत्य भार्यायै निजमनोरथकथनम्, भार्ययातत्प्रशंसनम्. श्लो० ४२ ॥

१९— १९ सुमनयासह सोमशर्मणोरेवाकपिलासंगमतीर्थे तपःकरणम्, तपोविघ्नभीतेन सोमशर्मणा नृहरिस्मरणम्,भगवतआविर्भावः,सोमशर्मकृतविष्णुस्तोत्रम्. श्लो०७५

२०— २० हरिणा सोमशर्मणे वंशतारकपुत्रवरप्रदानम्, अमरकंटकेआश्रमं विधायबहुकालपर्यंतमुभयोर्निवासः, कदाचिन्मुनौस्नानंविधायाश्रमाभिमुखेसति शक्रेण तदाश्रमांगणं समागत्यसुमनायाः समर्हणवर्णनम्, आश्रमागतमुनिंप्रतिसुमनया सर्वदेवदेवीगणकृतस्वसमर्हणचरित्रवर्णनम्,अनंतरं कियताकालेनसुमनायां सोमशर्मणः सकाशात्सुव्रतनामपुत्रोत्पत्तिः, उभयोरपि सोमशर्मसुमनयोः पुत्रपौत्रधनसमृद्धिसौख्यवर्णनम्. श्लो० ६० ॥

२१— २१ सुव्रताख्यानकथनम्, तत्रबाल्यादारभ्यसुव्रतस्यक्रीडादिष्वपि कृष्णावधानम्, सुव्रतस्यनर्मदादक्षिणतटवर्तिसिद्धेश्वरमहादेवसमाश्रयपुरःसरंतपःकरणम्. श्लो० ३७ ॥

२२— २२ सुव्रतस्य पूर्वजन्मचरित्रवर्णनम्, तत्रप्राग्जन्मनितस्य सुव्रतस्यरुक्मांगदराजस्य संध्यावलीभार्यायां धर्मांगदनाम्ना प्रसिद्धिः, द्वितीयजन्मनि सोमशर्मणःसुमनायां सुव्रतनाम्ना प्रसिद्धिः तस्यचतपस्तुष्टेनविष्णुनावरप्रदानम्, सुव्रतेन

अ० प० विषयाः

विष्णुस्तोत्रकरणम्, सुव्रतस्यैंद्रपदप्राप्तिः, व्यासेनधर्मांगदादिविपयेसमयसंशयापनुत्त्यर्थंप्रश्नेकृतेब्रह्मणापुनःसृष्टिक्रमानुकथनेनतत्संशयनिराकरणम्. श्लो० ४९ ॥

२३— २३ सृष्टिसंहारकारणवर्णनम्, तत्र हिरण्यकशिपोर्नृसिंहरूपेणवधः, वाराहरूपेण हिरण्याक्षवधः, पुत्रवधसंतप्ताया दित्याः पतिसमीपेखेददर्शनपुरःसरंसर्वलक्षणसंपन्नपुत्रयाच्ञा, कश्यपवरेणदित्यागर्भधारणानंतरंबलनामकपुत्रप्रसवः, बलस्यसर्वसामर्थ्यसंपन्नत्वंवीक्ष्यशक्रेणसागरोपकण्ठेसंध्यासनोपगतस्यतस्यवज्रेणहननम्. श्लो० ४५ ॥

२४— २३ इंद्रात्पुत्रवधंश्रुत्वादुःखितयादित्या कश्यपायपुत्रवधेनिवेदितेकश्यपेनशक्रंप्रतिक्रोधादग्निकुण्डेजटाप्रक्षेपाद्वृत्रासुरोत्पादनम्, वृत्रासुरमसह्यंमत्वाशक्रेणमहर्षिद्वारावृत्रासुरंप्रतिसंधिकरणपुरःसरमर्धासनसमर्पणोत्तरं रंभयातदुन्मादनम्. श्लो० ५१ ॥

२५— २४ रंभासक्तस्यवृत्रस्यरंभाऽऽग्रहेणमधुपानम्, मधुपानप्रमत्तस्यवृत्रस्यशक्रेणवज्रेणहननम्. श्लो० २६ ॥

२६— २५ शक्रेणवृत्रवधाद्दुःखितयादित्याकश्यपप्रार्थनयाशक्रवधार्थंगर्भधृत्वामेरुपर्वतेकश्यपेनसहतपस्याकरणार्थंगमनम्, तत्रेंद्रेणवेषांतरंविधायतत्तपश्छिद्रान्वेषणार्थंतस्याःशुश्रूषाकरणम्, पादाशौचरूपतत्तपश्छिद्रंसमीक्ष्येंद्रेणतदुदरेप्रविश्यवज्रेण तद्गर्भस्यैकोनपंचाशत्खंडकरणम्, तेषांमरुन्नामकरणकारणवर्णनम्. श्लो० ३२॥

२७— २५ पृथुनासर्ववर्गेपुराज्यासनेराजवर्गस्थापनम्. श्लो० ३१ ॥

२८— २६ पृथुचरित्रवर्णनम्, तत्र वेनस्यौद्धत्यवर्णनम्, ऋषिभिर्वेनस्यसव्योरुमंथनम्, तस्मान्निषादोत्पत्तिः, वेनस्यदक्षिणपाणिमंथनात्पृथूत्पत्तिः, सर्वैर्मिलित्वा पृथो रा-

| अ० | प० | विषयाः |
| --- | --- | --- |
| | | ज्याभिषेककरणम्, पैतामहे यज्ञे सूतमागधयोः पृथुस्तवनायानुज्ञायां पृथुचरित्रसंबंधं विदित्वातत्कृतं पृथुस्तवनम्, पृथुनाविविधोपायैः पृथिवीदमने पृथिव्याः पृथुप्रार्थनम्. श्लो० १२१ ॥ |
| २९ | —२८ | धरणीप्रार्थनया पृथुना पृथिव्याः समीकरणपुरराष्ट्रादिप्रतिष्ठापनपुरःसरं विविधवत्सदोग्धृदुग्धकल्पनयादोहनम्. श्लो० ९१ ॥ |
| ३० | —२९ | वेनस्य पापांशनिर्गमनानन्तरं शुद्धिविषये संशयानानांमहर्षीणां प्रश्नोत्तरम्, सूतेन वेनस्य चरित्रवर्णनम्, तत्र सत्संगमाहात्म्यवर्णने लुब्धकशफरप्रोरितिहासवर्णनम्, मातामहदोषेण वेनस्य पापबुद्धित्ववर्णनम्, तत्र सुनीथाया वेनमातुः सुशंखनामकगंधर्वतनयापचारेण पापाचारमयपुत्रप्राप्तिरूपशापप्राप्तिः, अत्रिपुत्रस्यांगस्येंद्रसंपत्तिं दृष्ट्वातत्सदृशपुत्रप्राप्तिविषयकाभिलाषवर्णनम्. श्लो० ८५ ॥ |
| ३१ | —३१ | अंगस्यात्र्युपदेशेनेंद्रसदृशपुत्रावाप्तये तपस्याकरणायमेरुपर्वतं प्रति गमनम्. श्लो० १९. ॥ |
| ३२ | —३१ | मेरुपर्वते गंगातीरेऽगस्य तपःकरणात्प्रादुर्भूतवासुदेवस्यांगेन स्तोत्रकरणम्, तत्स्तुतिसंतुष्टेन भगवतांगाय शक्रसमपुत्रप्राप्तिरूपवरप्रदानम्. श्लो० ७५ ॥ |
| ३३— | ३३ | सुनीथाचरित्रम्, सुशंखगंधर्वताडनाल्लुब्धकुपुत्रशापया सुनीथया पितृकृतप्रतिबोधेनखिन्नयानिर्जनवनंप्रतिगमनम्, तत्र तत्सखीभिरागत्य चिंतापरित्यागविषये तस्या उपदेशकरणम्. श्लो० ३५ ॥ |
| ३४— | ३३ | सुनीथयासखीभ्यो निजदुष्कर्मनिरूपणानंतरं सखीभिर्ब्रह्मेंद्रहरादित्यकृष्णचंद्रयुधिष्ठिराणां दोषित्ववर्णनपुरःसरंसुनीथायाः प्रशंसाकरणपूर्वकं मोहनीविद्योपदेशकरणम्, सखीभिः सह भ्राम्यन्त्या सुनीथयानंदनवने तपस्यतोऽत्रिपुत्रस्यांगस्यदर्शनम्. श्लो० ४७ ॥ |
| ३५— | ३४ | रंभामुखादंगवृत्तंश्रुत्वातदाप्तये सुनीथायानिश्चयः. श्लो० १५ ॥ |
| ३६— | ३४ | रंभासहायेन मेरुपर्वते सुनीथया गायनप्रभावादंगवशीकरणम्, अंगसुनीथयोर्गांधर्वेण विधिना विवाहः, सुनीथायामंगाद्वेनाख्यपुत्रोत्पत्तिः, सुनीथयातस्य भाविदुष्कर्म विचिंत्य मुहुर्मुहुस्तस्मै धर्मोपदेशकरणम्. श्लो० ५७ ॥ |
| ३७— | ३५ | धर्मेणप्रजांपालयतो वेनस्यपापोदयसमये छद्मलिंगधारिणा पापपुरुषेण सहसंवादे धर्मश्रद्धाविध्वंसः. श्लो० ६१ ॥ |
| ३८— | ३६ | पापपुरुषोपदेशेन नास्तिक्यबुद्धिप्रादुर्भावाद्वेनस्यवैदिकधर्मकर्मपरित्यागपुरःसरमुन्मार्गवर्तनेमातापित्रादिवंद्यजनातिरस्करणम्, ऋषिभिर्धर्मोपदेशेनवेनबोधकरणम्, ऋषीणांवेनेननिरादरकरणम्, कुपितमहर्षिभयाद्वेनस्यवल्मीकेनिलयनम्, ऋषिभिर्वेनंबलादानीय तस्मान्निषादपृथूत्पादनवर्णनम्. श्लो० ४१ ॥ |
| ३९— | ३७ | रेवातीरे तृणबिंदोराश्रमेवेनस्य तपस्याकरणम्, तत्तपस्यासंतुष्टवासुदेवेनाविर्भूयवेनायस्वरूपकथनम्, दानमाहात्म्यवर्णनंच, दानोपयोगिकालदेशवर्णनम्. श्लो० १२७ ॥ |
| ४०— | ३९ | नित्यनैमित्तिकदानफलवर्णनम्. श्लो० ४६ ॥ |
| ४१— | ४० | भार्यातीर्थवर्णनप्रस्तावेवाराणसीस्थकृकलवैश्यपत्न्याः सुकलानाम्न्याः पातिव्रत्यचारित्रवर्णनम्, तत्र पत्यौ तीर्थयात्रां प्रयाते सति सुकलया दृढतरपातिव्रत्यपालनम्, सखीभिः सुकलायाः शरीरशोषणान्निवर्तनविषयेविज्ञप्तिकरणेऽपि सुकलयाताभ्यः पतिव्रताधर्मकथनपूर्वकेतिहासकथनम्. श्लो० ८४ ॥ |

| अ० | प० | विषयाः |
| --- | --- | --- |
| ४२— | ४२ | पातिव्रत्यविषये सुदेवायाश्चरित्रवर्णनम्, तत्र सुदेवयापत्न्या सहेक्ष्वाकुभूपस्य मृगयार्थमरण्यगमने तत्र वराहयूथपतेः सपरिवारजनेन नृपेण सह योद्धुं रणभूमिं प्रत्यागत्य युद्धकरणार्थं परस्परमंत्रकरणम्. श्लोकांकाः ७५ ॥ |
| ४३— | ४३ | इक्ष्वाकुभूपस्यसैनिकैः सह मेरुपर्वते गंगातीरे महायुद्धे लुब्धकसैनिकानां वराहाणां च महायुद्धेलुब्धकानांबहूनां वराहाणांचनाशः. श्लोकांकाः ८२ ॥ |
| ४४-- | ४५ | इक्ष्वाकुणा वराहयूथपतिहननम्. श्लोकांकाः १११ ॥ |
| ४५— | ४५ | स्वपतिं हतं दृष्ट्वा तत्पत्न्याशूकर्या लुब्धकैः सहमहायुद्धकरणे झार्झरेण तस्याअंगे शरवेधकरणम्, तया शूकर्यामहावेगेन झार्झरवधकरणम्, झार्झरकृतखड्गघातेन शूकर्या मह्यांपतनम्. श्लोकांकाः ३२ ॥ |
| ४६— | ४६ | भूमौपतितायाः श्वसंत्याः शूकर्याः सुदेवयाशीतलजलेनमुखसेचनम्, तत्सिक्तजलसंपर्कात्सूकर्यामानुषीवाण्या सुदेवाप्रशंसनम्, इक्ष्वाकुमतमादाय सुदेवया पृष्टे सति शूकर्या स्वभर्तुः शूकरस्यात्मनश्च पूर्वजन्मचरित्रवर्णनम्, तत्रादौभर्तुश्चरित्रवर्णने तस्यपूर्वजन्मनिगंधर्वस्य गीतपंडितस्य पुलस्त्यमुनित्रासनादृषिशापेन शूकरजन्मप्राप्तिवर्णनम्. श्लोकांकाः ६६ ॥ |
| ४७— | ४७ | शूकर्या आत्मनः पूर्वजन्मचरित्रवर्णने कलिंगदेशीयश्रीपुरनगरवास्तव्यवसुदत्तब्राह्मणतनयायाः सुदेवानाम्न्यादुराचारदूषितायाः पतिवंचनादिवर्णनम्, तत्पतिना शिवशर्मणातस्याः परित्यागः, सुदेवामात्रातात्पितरंवसुदत्तंप्रति अपत्यशिक्षणप्रकारवर्णनम्. श्लोकांकाः ६५ ॥ |
| ४८— | ४८ | वसुदत्तभार्यया भर्तारंप्रति निरर्गलकन्यादोषवर्णनप्रसंगेन वैदर्भदेशीयोग्रसेनराजतनयाया माथुरोग्रसेनराजभार्यायाः पद्मावतीनाम्न्याः पतिं विनापितृगृहमागतायाउच्छृंखलतयोपवनभूमिपुविक्रीडनवर्णनम्. श्लोकांकाः २७ ॥ |
| ४९— | ४८ | कदाचिद्वनक्रीडाहृतचेतसस्तस्याः कस्यचित्सरसस्तीरे गोभिलेन दैत्येन दर्शनम्, तत्कामपरितप्तेन गोभिलेन माययातत्पतिरूपंविधायतस्या धर्षणवर्णनम्. श्लोकांकाः ५४ ॥ |
| ५०— | ४९ | दैत्यंप्रति शप्तुकामांतां प्रति गोभिलेनदैत्येनपतिव्रतानां पुंश्चलीनांच कर्मवर्णनपुरःसरं तस्याः पद्मावत्याः पुंश्चलीत्वनिर्णयकरणम्, उदरे गर्भस्थापनकथनंच. श्लोकांकाः ६३ ॥ |
| ५१-- | ५० | पित्रादिभिर्ज्ञातदोषायाः पद्मावत्याः पतिगृहंप्रतिप्रेषणम्, तद्गर्भात्कंसोत्पत्तिः, एवंवसुदत्तेन पत्नीमुखात्कन्यादोषंश्रुत्वा सुदेवायाः कन्यायाः परित्यागः, सुदेवायाः पर्यटंत्या अदृष्टवशात्पतिगृहंप्रति गमनम्. श्लोकांकाः ५३ ॥ |
| ५२-- | ५१ | तत्र पतिगृहेमंगलानाम्न्याः स्वसपत्न्याः पातिव्रत्यदर्शनेनव्रीडितायाः सुदेवायारात्रौपश्चात्तापेन मरणम्, यमलोकेऽनेकदुःखप्राप्तिपूर्वकंशूकरीजन्मप्राप्तिवर्णनम्. शूकर्या सुदेवानाम्न्याइक्ष्वाकुराजभार्यायाः समीपे स्वोद्धारायैकदिनपातिव्रत्यपुण्ययाचनायामिक्ष्वाकुप्रेरणया सुदेवयातस्या एकदिनपातिव्रत्यपुण्यदानाच्छूकरीयोनितउद्धरणम्, सुदेवानाम्न्याब्राह्मणकन्यायाः स्वर्गारोहणम्. श्लोकांकाः ४६ ॥ |
| ५३— | ५२ | सुकलायाः पातिव्रत्यभंगार्थं समुद्युक्तस्येंद्रस्य श्रमवैफल्यम्, तत्र तन्मोहनायेंद्रेणकंदर्पायाज्ञाकरणम्, इंद्रस्य पुरुषरूपंधृत्वाकंदर्परतिप्रभृतिमोहनवर्गमादायसुकलासमीपंप्रत्यागत्यतन्मोहनायविविधोपायविधानम्, इंद्रप्रेषितयादू- |

| अ० | प० | विषयाः |
|---|---|---|
| | | त्यासुकलांप्रति पातिव्रत्यभंगार्थं चातुर्येणापदेशेकृतेऽपितस्याः पुरुषांतरेऽप्रीतिदर्शकशरीरविकारवर्णनम्. श्लोकांकाः १०९ ॥ |
| ५४ | ५४ | इंद्रस्यस्वयं सह रतिकंदर्पाभ्यां सुकलासमीपंप्रतिगमने सुकलयातंदृष्ट्वा स्वगृहमध्ये प्रवेशकरणम्. श्लोकांकाः २५ ॥ |
| ५५ | ५४ | सुकलासाधने शक्रमदनयोः साध्यासाध्यत्वविषये विवादानंतरं मदनेन सुकलांप्रति क्रीडादूतीप्रेषणम्, मदनस्यस्वयंशक्रेण सह गमनंच. श्लोकांकाः २५ ॥ |
| ५६ | ५५ | तन्मदनेंद्रचरित्रं दृष्ट्वा सत्यधर्मादीनांपरस्परं संवादः, धर्मेण सत्यसंरक्षणार्थमुपायचिंतया भर्त्रागमनसूचकशकुनकरणाय प्रज्ञायाः प्रेषणम्, प्रज्ञया शकुनशब्दकरणोत्तरं शकुनार्थजिज्ञासया सुकलया ब्राह्मणसमीपंगत्वाब्राह्मणमुखात्तन्निर्णयनम्. श्लोकांकाः ३७ ॥ |
| ५७ | ५६ | क्रीडया मदनदूत्या सुकलां प्रत्यागत्य तांवाक्यैर्मोहयित्वा तयासहोपवनं प्रति गमनम्, मदनस्येंद्रदेहे प्रवेशः, श्लोकांकाः ३८ ॥ |
| ५८ | ५६ | इंद्रसुकलयोः संवादे सुकलयेंद्रस्य निराशीकरणम्, इंद्रादीनां स्वस्वस्थानं प्रति गमनम्. श्लोकांकाः ४३ ॥ |
| ५९ | ५७ | तीर्थयात्रांकृत्वा गृहं प्रति प्रयातुकामस्य कृकलस्य मध्येमार्गं धर्मेणपितृवंधनदर्शनम्, धर्मकृकलसंवादे धर्मेण पातिव्रतामाहात्म्यकथनम्. श्लोकांकाः ३४॥ |
| ६० | ५८ | कृकलवैश्येन धर्मोपदेशाद्गृहमागत्यपत्नीहस्तेनान्नं विपाच्य श्राद्धकरणेतत्पितृमुक्तिवर्णनम्, सुकलाचरित्रमाहात्म्यम्. श्लोकांकाः ३२ ॥ |
| ६१ | ५८ | पितृतीर्थवर्णनम्, तत्र पितृभक्तस्य कुंडलब्राह्मणपुत्रस्यसुकर्मणः कथानकवर्णनम्, पिप्पलब्राह्मणस्यतपस्यया विश्ववश्यत्वप्राप्त्यामहागर्वः, सारसवचनात्पिप्पलस्य सुकर्माणं प्रत्यागमनम्. श्लोकांकाः ६० ॥ |
| ६२ | ५९ | सुकर्मपिप्पलसंवादः, सुकर्मणेंद्रादिदेवानयनम्, अर्वाचीनपराचीनगतिज्ञानवर्णनम्, सुकर्मणा स्वकर्मवर्णनम्, पितृभक्तिमाहात्म्यवर्णनम्. श्लोकांकाः ८२ ॥ |
| ६३ | ६१ | मातपितृतीर्थमाहात्म्यम्. श्लोकांकाः २९ ॥ |
| ६४ | ६१ | मातापितृतीर्थमाहात्म्यवर्णने नहुषस्य ययातेश्च चरित्रवर्णनम्, इंद्रेण स्वपदभ्रंशशंकयाययातिनृपंप्रतिस्वर्गमानेतुं मातलिदूतप्रेषणम्, मातलिययातिसंवादः, शरीरोत्पत्तिविनाशादिवर्णनम्. श्लोकांकाः ९५ ॥ |
| ६५ | ६३ | शरीरदोषवर्णनम्. श्लोकांकाः ९ ॥ |
| ६६ | ६३ | प्रथमतः शरीरोत्पत्तिपूर्वकशरीरवर्णनम्, गर्भावस्थायां जीवचेष्टितम्, शरीरस्याशुचित्वम्, विविधसुखदुःखादिविवेकः. श्लोकांकाः २३५ ॥ |
| ६७ | ६७ | मर्त्यलोकेमनुष्यकृतानां सुकृतदुष्कृतकर्मणां विपाकः. श्लोकांकाः ११५ ॥ |
| ६८ | ६९ | सुकृतकर्मफलकथनम्. श्लोकांकाः १७ ॥ |
| ६९ | ७० | विविधशिवधर्मकथनम्. श्लोकांकाः ३९ ॥ |
| ७० | ७० | महादारुणयमलोकपीडावर्णनम्. श्लोकांकाः ११ ॥ |
| ७१ | ७१ | देवलोकसंस्थानवर्णनम्. श्लो० २७ ॥ |
| ७२ | ७१ | ययातिना स्वशरीरप्रशंसापूर्वकं स्वर्गागमनास्वीकरणम्, मातलेरिंद्रंप्रतिगमनम्. |
| ७३ | ७२ | मातलौ स्वर्गं गते सति ययातिना स्वराज्ये विष्णुसेवाज्ञोद्घोषणम्. श्लो० १७॥ |
| ७४ | ७२ | नृपाज्ञाश्रवणोत्तरं सर्वैः प्रजाजनैर्भागवतधर्मस्वीकरणम्. श्लो० २९ ॥ |

| अ० | प० | विषयाः |
| --- | --- | --- |
| ५७— | ५६ | भाद्रपदशुक्लपक्षपद्मैकादशीमाहात्म्यवर्णनम्. श्लो० ४१ ॥ |
| ५८— | ५७ | आश्विनकृष्णपक्षेंदिरामाहात्म्यवर्णनम्. श्लो० ३६ ॥ |
| ५९— | ५८ | आश्विनशुक्लपक्षपाशांकुशैकादशीमाहात्म्यवर्णनम्. श्लो० २८ ॥ |
| ६०— | ५८ | कार्तिककृष्णपक्षरमैकादशीमाहात्म्यवर्णनम्. श्लो० ५४ ॥ |
| ६१— | ५९ | कार्तिकशुक्लपक्षप्रबोधिन्येकादशीमाहात्म्यवर्णनम्. श्लो० ६८ ॥ |
| ६२— | ६१ | पुरुषोत्तममासकृष्णपक्षकमलैकादशीमाहात्म्यवर्णनम्. श्लो० ४३ ॥ |
| ६३— | ६२ | पुरुषोत्तममासशुक्लपक्षकामदैकादशीमाहात्म्यवर्णनम्. श्लो० २२ ॥ |
| ६४— | ६२ | चातुर्मास्यव्रतविधिमाहात्म्यवर्णनम्. श्लो० १२१ ॥ |
| ६५— | ६४ | चातुर्मास्यव्रतोद्यापनविधिवर्णनम्. श्लो० २० ॥ |
| ६६— | ६५ | यमाराधनम्, वैतरणीव्रतम्, तत्रमुद्गलवृत्तांतवर्णनम्. श्लो० ८५ ॥ |
| ६७— | ६६ | गोपीचन्दनमाहात्म्यकथनम्. श्लो० १३ ॥ |
| ६८— | ६६ | वैष्णवलक्षणमाहात्म्यवर्णनम्. श्लो० २० ॥ |
| ६९— | ६७ | श्रवणद्वादशीव्रतविधानकथनम्. तत्रमरुदेशस्थप्रेतकथानकवर्णनम्. श्लो० ७५ |
| ७०— | ६८ | नदीत्रिरात्रव्रतमाहात्म्यवर्णनम्. श्लो० ३२ ॥ |
| ७१— | ६९ | भगवन्नाममाहात्म्यवर्णनम्. तत्रपार्वतीशिवसंवादे विष्णुसहस्रनामस्तोत्रवर्णनम्. श्लो० ३३१ ॥ |
| ७२— | ७५ | विष्णुसहस्रनाममाहात्म्यवर्णनम्. श्लो० १७ ॥ |
| ७३— | ७५ | रामरक्षास्तोत्रवर्णनम्. श्लो० १२ ॥ |
| ७४— | ७६ | धर्मप्रशंसापूर्वकदानधर्ममाहात्म्यवर्णनम्. श्लो० २६ ॥ |
| ७५— | ७६ | गंडिकातीर्थमाहात्म्यम्. श्लो० २६ ॥ |
| ७६— | ७७ | आभ्युदयिकौर्ध्वदेहिकस्तोत्रवर्णनम्. श्लो० ४२ ॥ |
| ७७— | ७७ | ऋषिपंचमीव्रतविधानम्, तत्र देवशर्मब्राह्मणस्य बलीवर्दत्वप्राप्तिप्रभृत्याख्यायिकाकथनम्. श्लो० ६२ ॥ |
| ७८— | ७९ | अपामार्जनस्तोत्रवर्णनम्. श्लो० ९१ ॥ |
| ७९— | ८० | अपामार्जनस्तोत्रपाठविधिकथनम्, तत्फलमाहात्म्यवर्णनंच. श्लो० १६ ॥ |
| ८०— | ८१ | विष्णुमाहात्म्यवर्णनम्, विष्णुमंत्रमाहात्म्यवर्णनम्, पुंडरीककथानकवर्णनम्, तत्र नारदेन सह पुंडरीकस्य समागमः, नारदेन पुंडरीकाय शास्त्रसिद्धांतरहस्योपदेशकरणम्, पुंडरीकस्य नारदोपदेशं श्रुत्वा भगवदाराधनेन भगवतःप्रत्यक्षदर्शनम्, पुंडरीककृतभगवत्स्तुतिः, भगवतः प्रसादात्पुंडरीकस्यमोक्षवर्णनम्. श्लो० १६९ ॥ |
| ८१— | ८४ | गंगामाहात्म्यवर्णनम्. श्लो० ४२ ॥ |
| ८२— | ८५ | वैष्णवलक्षणवर्णनम्, वैष्णवप्रशंसा, विष्णुमूर्तिपूजनफलवर्णनम्. शालग्रामपूजनफलवर्णनम्. श्लो० ३९ ॥ |
| ८३— | ८५ | सर्वमासविधिवर्णनम्, तत्र चैत्रशुक्लैकादश्यां दोलामहोत्सवविधिवर्णनम्. श्लो० ३४ ॥ |
| ८४— | ८६ | चैत्रशुक्लद्वादश्यांदमनकमहोत्सववर्णनम्. श्लो० ३१ ॥ |
| ८५— | ८७ | वैशाखज्येष्ठाषाढेषु भगवतोजलशयनमहोत्सववर्णनम्. श्लो० ३० ॥ |
| ८६— | ८७ | श्रावणे पवित्रारोपणविधिवर्णनम्. श्लो० ४१ ॥ |
| ८७— | ८८ | चैत्रादिमासक्रमेण चंपकादिपुष्पैर्विष्णुपूजनवर्णनम्, तत्फलकथनं च. श्लो० २७ ॥ |
| ८८— | ८९ | कार्तिकमाहात्म्यारंभः, तत्र नारदस्य कृष्णदिदृक्षया द्वारकायामागमनम्, नारदेन कृष्णाय कल्पवृक्षपुष्पोपहारदानम्, कृष्णेन सत्यभामां विस्मृत्या- |

| अ० | प० | विषयाः |
| --- | --- | --- |
| | | न्यखीभ्यो विभज्य पुष्पदानम्, पुष्पालाभरुष्टायाः सत्यभामायाः कल्पद्रुमदानाय तया सह गरुडमारुह्य स्वर्गंप्रति गत्वेंद्रं विजित्य स्वर्गात्कल्पद्रुममानीय सत्यभामाया अंगणेतस्यरोपणम्, सत्यभामया तुलापुरुषदानकरणम्, श्रीकृष्णसत्यासंवादे सत्यभामया महाभाग्यशालित्वप्रापककारणजिज्ञासया प्रश्ने कृते सति कृष्णेन तस्याः पूर्वजन्मवृत्तांतवर्णनम्, तत्र मायापुरीस्थदेवशर्मब्राह्मणकन्यायाश्चरित्रम्. श्लो० ४५ ॥. |
| ८९— | ९० | तस्या गुणवत्याः कार्तिकसेवनात्सत्यात्वप्राप्तिवर्णनम्. श्लो० ३० ॥ |
| ९०— | ९० | पृथुनारदसंवादे शंखासुराख्यानवर्णनम्, तत्र शंखासुरकृतवेदहरणवर्णनम्, विष्णुना कार्तिकप्रशंसाकरणम्, श्लो० ६१ ॥ |
| ९१— | ९१ | विष्णुना मत्स्यावतारं धृत्वा शंखासुरवधकरणम्, प्रयागोत्पत्तिमाहात्म्यवर्णनम्. श्लो० ३० ॥ |
| ९२-- | ९१ | कार्तिकव्रतिनां नियमवर्णनम्. श्लो० ३२ ॥ |
| ९३— | ९२ | कार्तिक स्नानार्घ्यादिवर्णनम्. लो० ३२ ॥ |
| ९४— | ९३ | कार्तिकमास्यनुष्ठेयानां नियमानां वर्णनम्,कार्तिकव्रतवतां प्रशंसा. श्लो०२८॥ |
| ९५-- | ९३ | कार्तिकव्रतोद्यापनविधानवर्णनम्. श्लो० ३१ ॥ |
| ९६— | ९४ | तुलसीमाहात्म्यवर्णनप्रसंगेन जालंधरोत्पत्तिवर्णनम्. श्लो० ३३ ॥ |
| ९७— | ९४ | जालंधरदैत्यकृतदेवपराजयपूर्वकममरावतीविजयवर्णनम्. श्लो० ३३ ॥ |
| ९८— | ९५ | जालंधरदैत्यभयत्रस्तदेवकृतसंकष्टनाशनविष्णुस्तोत्रम्, विष्णोर्जालंधरेणसह युद्धम्, विष्णोर्जालंधरेणसह युद्धे संतुष्टस्य तस्मैवरप्रदानम्, तद्याचितवरपूर्तये लक्ष्म्या सह विष्णुना जालंधरगृहेवासकरणम्, जालंधरस्य राज्यस्थितिवर्णनम्. श्लो० २९ ॥ |
| ९९— | ९६ | जालंधरेण नारदमुखात्पार्वत्याः सौंदर्यातिशयं निशम्य शिवं प्रति राहोर्दौत्येन प्रेषणम्, शिवभ्रूमध्यात्कीर्तिमुखगणोत्पत्तिवर्णनम्, कीर्तिमुखपूजावश्यकत्वकथनम्, कीर्तिमुखोत्सृष्टस्य राहोर्बर्बरदेशेपतनम्. श्लो० ३४ ॥ |
| १००-- | ९६ | शंकरेण सर्वदेवतेजोभिः सुदर्शनचक्रनिर्माणम्, शिवगणानां दैत्यगणैः सह संग्रामः. श्लो० ३२ ॥ |
| १०१— | ९७ | नंद्यादीनां शिवगणानां कालनेम्यादिभिः सह द्वंद्वयुद्धवर्णनम्, तत्र शिवगणानां पराजयवर्णनम्. श्लो० ३१ ॥ |
| १०२-- | ९७ | शिवेन दैत्यपराभवकरणम्, शिवजालंधरयुद्धम्, जालंधरेण गांधर्वमायया शंकरं मोहयित्वा शिवरूपं धृत्वा पार्वतीसमीपं प्रति गमनम्, पार्वत्या तस्य दानवत्वं परीक्ष्याकस्मादन्तर्धाय मानसोत्तरंप्रतिगमनम्, पार्वतीमदृष्ट्वा जालंधरस्य रणांगणं प्रत्यागमनम्, पार्वतीकृतस्मरणेन विष्णोस्तत्समीपं प्रत्यागमनम्, तद्वृत्तांतंश्रुत्वा विष्णुना वृंदापातिव्रत्यभंगाय प्रतिज्ञाकरणम्. श्लो० ३२ ॥ |
| १०३-- | ९८ | वृंदया दुःस्वप्नं दृष्ट्वोद्विग्नया वनांतरे भ्रमणम्, तत्र राक्षसोपद्रुताया वृंदायाः तापसवेषधारिणा विष्णुना राक्षसौ निवार्यरक्षणम्, मायया गगनात्कपिभ्यां जालंधरशिरःकबंधानयनम्, वृंदायाःस्वपतिशिरःकबन्धनिरीक्षणेन शोककरणम्, विष्णुमायया जालंधरवेषं धृत्वा वृंदायाः पातिव्रत्यभंगकरणम्, कदाचिद्वृंदया जालंधररूपधारिणं विष्णुं विज्ञाय तस्य भार्याहरणरूपशापं दत्वाग्नौ प्रवेशनम्, विष्णोस्तच्चिताभस्मावगुण्ठनम्. श्लो० ३१ ॥ |
| १०४-- | ९९ | शंकरेण युद्धे जालंधरस्य वधकरणम्, जालंधरस्य शिवसायुज्यप्राप्तिः, शिवाज्ञयादेवैर्वृंदामोहितविष्णुमोहविनाशायाद्यमायास्तोत्रकरणम्, आदिमा- |

| अ० | प० | विषयाः |
|---|---|---|
| | | याज्ञया गौरीलक्ष्मीस्वराभिर्देवेभ्यः स्वस्वबीजदानम्, वृंदाचितास्थाने देवैर्गौर्याज्ञया तद्बीजारोपणम्. श्लो० २९ ॥ |
| १०५ | ९९ | तद्बीजत्रयोत्पन्नानां स्त्रीरूपधारिणीनां धात्रीमालतीतुलसीनां दर्शनेन विष्णोर्भ्रांतिनिरासः, मालत्या बर्बरीनामप्राप्तिकारणवर्णनम्, धात्रीतुलस्योर्माहात्म्यम्. श्लो० २९ ॥ |
| १०६ | १०० | कलहाचरित्रवर्णनम्, धर्मदत्तब्राह्मणेन सह राक्षसीत्वं प्रति प्राप्तायाः कलहाया मध्येमार्गं समागमः, धर्मदत्तेन तस्या उपरि तुलसीमिश्रजलसेचनम्, कलहया धर्मदत्ताग्रे स्वपूर्वजन्मवृत्तान्तवर्णनम्. श्लो० ३१ ॥ |
| १०७ | १०१ | धर्मदत्तेन द्वादशाक्षरमन्त्रं जपित्वा तदङ्गे तुलसीमिश्रजलप्रक्षेपात्कलहाया दिव्यदेहावाप्तिवर्णनम्, वैकुंठं प्रति कलहां नेतुमागताभ्यां विष्णुदूताभ्यां धर्मदत्तं प्रति कलहयान्याभ्यां च स्त्रीभ्यां सह दशरथोभविष्यसीति वरप्रदानम्. श्लो० २६ ॥ |
| १०८ | १०१ | धर्मदत्तविष्णुगणसंवादे विष्णुव्रतमाहात्म्यवर्णनम्, तत्र विष्णुदासविप्रचोलराजयोः कथानकवर्णनम्. श्लो० ३० ॥ |
| १०९ | १०२ | विष्णुदासविप्रचोलराजयोर्भगवन्निरतिशयभक्त्या वैकुंठप्राप्तिवर्णनम्, मुद्गलगोत्रोद्भवानां शिखाहीनत्वकारकणवर्णनम्. श्लो० ३३ ॥ |
| ११० | १०२ | जयविजयद्वारपालयोः पूर्वजन्मवृत्तान्तवर्णनम्, कलहाया विष्णुगणैर्वैकुण्ठप्रापणम्. श्लो० ३२ ॥ |
| १११ | १०३ | कृष्णावेण्याद्यनेकनदीनां माहात्म्यवर्णनम्, तत्र कृष्णावेण्योरुत्पत्तिवर्णनम्, तत्र ब्रह्मदेवकृतयज्ञवर्णनम्. श्लो० ३१ ॥ |
| ११२ | १०४ | एकादशीमाघकार्तिकतुलसीद्वारकानां भगवत्प्रियत्वम्, संसर्गवशात्पुण्यपापांशप्राप्तिवर्णनम्. श्लो० ३० ॥ |
| ११३ | १०४ | कार्तिकव्रतप्रशंसायां धनेश्वरविप्रवृत्तांतवर्णनम्, धनेश्वरस्यकार्तिकव्रतिसंसर्गः. श्लो० ३४ ॥ |
| ११४ | १०५ | धनेश्वराय यमेन नरकदर्शनानंतरं धनेश्वरस्य धनयक्षेति नाम्ना कुबेरानुगत्वप्राप्तिवर्णनम्. श्लो० २९ ॥ |
| ११५ | १०५ | सत्यभामायै कृष्णेन कार्तिकमाहात्म्यमुक्त्वा सायंसंध्योपासनार्थं जननीगृहंप्रति गमनम्, अश्वत्थवटप्रशंसाकरणम्. श्लो० २९ ॥ |
| ११६ | १०६ | अश्वत्थवृक्षस्यास्पृश्यत्वकारणवर्णनेऽलक्ष्मीवृत्तांतवर्णनम्. श्लो० २८ ॥ |
| ११७ | १०७ | शिवषडाननसंवादे कार्तिकस्नानमाहात्म्यवर्णनम्. श्लो० ३२ ॥ |
| ११८ | १०७ | कार्तिके तिलधेन्वादिदानवर्णनम्, कार्तिकव्रतिनां परान्नवर्जनादिविविधनियमवर्णनम्, विष्णुपूजनफलवर्णनम्. श्लो० ६० ॥ |
| ११९ | १०९ | माघमासस्नानमाहात्म्यम्, शूकरक्षेत्रमाहात्म्यवर्णनम्, मासोपवासव्रतविधानवर्णनम्. श्लो० ५३ ॥ |
| १२० | ११० | शालिग्रामशिलार्चनविधिमाहात्म्यवर्णनम्, शालिग्रामशिलायां वासुदेवादिमूर्तिलक्षणवर्णनम्, कार्तिकमासे शालिग्रामपूजाफलवर्णनम्. श्लो० ९२ ॥ |
| १२१ | १११ | धात्रीवृक्षच्छायायां पिण्डदानमाहात्म्यवर्णनम्, केतकीप्रभृतिभिः पूजनस्य फलवर्णनम्, दीपदानविधिवर्णनम्. तत्र गोपवृत्तांतवर्णनम्. श्लो० ३७ ॥ |
| १२२ | ११२ | दीपावलीदिनपंचके त्रयोदश्यादिद्वितीयान्तेकर्तव्यकृत्यनिर्णयः, दीपावलीमहोत्साहेराज्ञां कर्तव्यवर्णनम्, यमद्वितीयामाहात्म्यवर्णनम्. श्लो० १०३ ॥ |

अ० प० विषयाः

१२३—११४ मासोपवासविधिमाहात्म्यकथनम्. श्लो० ४२ ॥

१२४—११५ प्रबोधिन्येकादशीमाहात्म्यवर्णनम्, भीष्मपंचकव्रतमाहात्म्यवर्णनम्, कार्तिकमाहात्म्यश्रवणपठनफलवर्णनम्. श्लो० ९६ ॥

१२५—११६ माघमासमाहात्म्यारंभः, माघमाहात्म्यजिज्ञासया सूतं प्रति मुनीनां प्रश्नः, सूतेनोमामहेश्वरसंवादेनमाघमाहात्म्यकथनम्. तत्र दिलीपस्य मृगयार्थं वनप्रवेशवर्णनम्, तत्प्रसंगेन वनशोभावर्णनम्, मृगयां विधाय पुरं प्रत्यावृत्तस्य दिलीपस्य हारीतेन मुनिना सह समागमः, हारीतानुज्ञया दिलीपस्य वसिष्ठं प्रत्यागमनम्, वासिष्ठदिलीपसंवादः, माघमासे प्रातःस्नानदानमाहात्म्यवर्णनम्. तत्र मणिकूटपर्वतस्थव्याघ्रमुखविद्याधरस्य भृगुमहर्ष्युपदेशेनमाघशुक्लैकादश्यां स्नानात्सुमुखत्वप्राप्तिवर्णनम्. श्लो० १७१ ॥

१२६—१२०माघस्नानमाहात्म्यवर्णने कार्तवीर्यदत्तात्रेयसंवादवर्णनम्. तत्र दत्तात्रेयेण शरीरानित्यतादिरहस्यकथनपुरःसरं माघस्नानमाहात्म्यवर्णनम्, तत्प्रसंगेन कुब्जिकाब्राह्मणीचरित्रसुंदोपसुंदवधवृत्तान्तवर्णनम्. श्लो० ८८ ॥

१२७—१२१ माघस्नानविधिवर्णनम्, तत्र कांचनमालिन्यप्सरसाराक्षसस्य धर्मोपदेशकरणम्. तदुपदेशेनराक्षसस्य स्वर्गप्राप्तिवर्णनम्. श्लो० १७७ ॥

१२८—१२५ माघस्नानमाहात्म्यवर्णने गंधर्वकन्यानां वेदनिधिमुनिपुत्रस्याग्निपस्यच परस्परं शापदानेन पिशाचत्वप्राप्तौ दैववशाल्लोमशसमागमः, लोमशेन माघमासस्नानमाहात्म्यकथनम्, तत्रावंतिदेशस्थवीरसेनराजवृत्तान्तनिरूपणम्, पिशाचमोचनेतिहासवर्णने प्लक्षप्रस्रवणस्थदेवद्युतिविप्रचरित्रवर्णनम्, देवद्युतिना विष्णुस्तोत्रकरणम्. श्लो० २९६ ॥

१२९—१३० द्राविडदेशस्थचित्रनामकभूपतेरधर्माचारतया पैशाच्यप्राप्तौ देवद्युतिना सहसमागमः देवद्युतिना तस्य प्रयागे माघस्नानाज्ञाकरणपूर्वकंमाघस्नानमाहात्म्य कथनम्, तत्र केरलस्थवसुनामकब्राह्मणवृत्तांतकथनम्, तस्य वसुब्राह्मणस्य प्रेतत्वप्राप्तौ केनचित्कार्पटिकेन सहसमागमः, कार्पटिकाय केरलपिशाचेन स्ववृत्तांतनिवेदनम्, तत्र सारसवानरवृत्तांतवर्णनम्, तत्र सारसेनवानराय निज वृत्तांतकथनम्, प्रेतप्रार्थनयाकार्पटिकेनमनसिविचार्य प्रेतायगंगाजलप्रदानम्, तेनगंगाजलप्राशनेन केरलवसुपिशाचस्यमुक्तिः,प्रयागमाहात्म्यश्रवणाद्द्राविडदेशपतेश्चित्रराजस्यमोक्षः, लोमशवचनात्पिशाचीनांपिशाचस्यच व्योममार्गेणभूगतलोमशेनसहप्रयागं प्रतिगमनम्, लोमशेन तेभ्यःप्रयागदर्शनपूर्वकंप्रयागमाहात्म्यकथनम्; प्रयागे लोमशवचनाद्गंधर्वकन्यानां मुनिपुत्रस्य पैशाच्यान्मुक्तिः, लोमशवचनेनतासां गंधर्वकन्यानामग्निपेन सह विवाहः. श्लो० २२८ ॥

१३०—१३५ विष्णुभक्तिमाहात्म्यवर्णनम्. श्लो० १९ ॥

१३१—१३६ शालिग्रामशिलामाहात्म्यवर्णनम्. श्लो० २९ ॥

१३२—१३६ विष्णुस्मरणमाहात्म्यवर्णनम्. श्लो० १५३ ॥

१३३—१३९ जंबूद्वीपस्थविविधतीर्थवर्णनम्. श्लो० ४० ॥

१३४—१४० वेत्रवतीनदीमाहात्म्यवर्णनम्. श्लो० ३१ ॥

१३५—१४० साभ्रमतीनदीमाहाम्यवर्णनम्. श्लो० १३५ ॥

१३६—१४३ साभ्रमतीप्रवाहागतनंदिकुंडकपालकुंडमाहात्म्यवर्णनम्. श्लो० १९ ॥

१३७—१४३ साभ्रमत्याःसप्तस्रोतोमाहात्म्यवर्णनम्, श्वेतातीर्थमाहात्म्यवर्णनंच. श्लो० २३ ॥

१३८—१४४ वकुलासंगमे गणतीर्थमाहात्म्यवर्णनम्. श्लो० १५ ॥

१३९—१४४ अग्निपालेश्वरमाहात्म्यवर्णनम्. श्लो० ४६ ॥

| अ० | प० | विषयाः |
|---|---|---|
| १४० | १४५ | साभ्रमतीहिरण्यासंगममाहात्म्यवर्णनम्. श्लो० १६ ॥ |
| १४१ | १४५ | मधुरादित्यमाहात्म्यवर्णनम्. श्लो० ४५ ॥ |
| १४२ | १४६ | कपितीर्थमाहात्म्यवर्णनम्. श्लो० १३ ॥ |
| १४३ | १४६ | सप्तधारतीर्थमाहात्म्यवर्णनम्. श्लो० २६ ॥ |
| १४४ | १४६ | ब्रह्मवल्लीतीर्थवृषतीर्थखंडहृदगोहृदमाहात्म्यवर्णनम्. श्लो० २९ ॥ |
| १४५ | १४७ | साभ्रमतीहस्तिमतीसंगमेश्वरतीर्थमाहात्म्यवर्णनम्. तत्रसोमेश्वरमाहात्म्यकथनंच. श्लो० १६ ॥ |
| १४६ | १४७ | रुद्रमहालयतीर्थमाहात्म्यवर्णनम्. श्लो० ८ ॥ |
| १४७ | १४७ | खड्गतीर्थखड्गधारेश्वरमाहात्म्यवर्णनम्. श्लो० ७ ॥ |
| १४८ | १४८ | मालार्कतीर्थमाहात्म्यवर्णनम्. श्लो० ९ ॥ |
| १४९ | १४८ | चन्दनेश्वरमाहात्म्यवर्णनम्. श्लो० ११ ॥ |
| १५० | १४८ | जांबवततीर्थमाहात्म्यवर्णनम्. श्लो० १४ ॥ |
| १५१ | १४८ | इन्द्रग्रामतीर्थधवलेश्वरतीर्थमाहात्म्यवर्णनम्. श्लो० १०० ॥ |
| १५२ | १५० | बालापेंद्रतीर्थमाहात्म्यवर्णनम्. श्लो० ४४ ॥ |
| १५३ | १५१ | दुर्धर्षेश्वरतीर्थमाहात्म्यवर्णनम्. श्लो० २३ ॥ |
| १५४ | १५१ | खड्गधारेश्वरतीर्थमाहात्म्यवर्णनम्. श्लो० ७२ ॥ |
| १५५ | १५३ | दुग्धेश्वरतीर्थमाहात्म्यवर्णनम्. श्लो० ४० ॥ |
| १५६ | १५३ | चंद्रभागानदीवर्तिचंद्रेश्वरमाहात्म्यवर्णनम्. श्लो० ५१ ॥ |
| १५७ | १५४ | पिप्पलादतीर्थमाहात्म्यवर्णनम्. श्लो० ११॥ |
| १५८ | १५४ | पिचुमंदार्कतीर्थमाहात्म्यवर्णनम्. श्लो० १४ ॥ |
| १५९ | १५४ | सिद्धक्षेत्रकोटराक्षीतीर्थमाहात्म्यवर्णनम्. श्लो० १३ ॥ |
| १६० | १५४ | वामनतीर्थराजमाहात्म्यवर्णनम्. श्लो० ५ ॥ |
| १६१ | १५४ | सोमतीर्थमाहात्म्यवर्णनम्. श्लो० १७ ॥ |
| १६२ | १५५ | कापोतिकतीर्थमाहात्म्यवर्णनम्. श्लो० १८ ॥ |
| १६३ | १५५ | गोतीर्थमाहात्म्यवर्णनम्. श्लो० ५ ॥ |
| १६४ | १५५ | कश्यपहृदमाहात्म्यवर्णनम्. श्लो० ९ ॥ |
| १६५ | १५५ | भूतेश्वरतीर्थघटेश्वरतीर्थवैद्यनाथतीर्थविजयितीर्थमाहात्म्यवर्णनम्. श्लो० १०॥ |
| १६६ | १५६ | पांडुरार्यातीर्थमाहात्म्यवर्णनम्. श्लो० ८ ॥ |
| १६७ | १५६ | चंडेशतीर्थगाणपत्यतीर्थमाहात्म्यवर्णनम्. श्लो० ८ ॥ |
| १६८ | १५६ | वार्त्रघ्नीनदीमाहात्म्यवृत्तांतवर्णनम्. श्लो० ७१ ॥ |
| १६९ | १५७ | वाराहतीर्थमाहात्म्यवर्णनम्. श्लो० ११ ॥ |
| १७० | १५७ | साभ्रमतीसंगमतीर्थमाहात्म्यवर्णनम्. श्लो० ५ ॥ |
| १७१ | १५८ | संगमस्थसत्तीर्थमाहात्म्यवर्णनम्. श्लो० ४ ॥ |
| १७२ | १५८ | नीलकंठतीर्थमाहात्म्यवर्णनम्. श्लो० ४ ॥ |
| १७३ | १५८ | दुर्गासाभ्रमतीसमुद्रसंगमतीर्थमाहात्म्यवर्णनम्. श्लो० ६ ॥ |
| १७४ | १५८ | श्रीनृसिंहव्रतनृसिंहतीर्थमाहात्म्यवर्णनम्. श्लो० ९७ ॥ |
| १७५ | १५९ | भगवद्गीताप्रथमाध्यायमाहात्म्यवर्णनम्, तत्र विष्णुलक्ष्मीसंवादे सुशर्मवृत्तांतवर्णनम्. श्लो० ५४ ॥ |
| १७६ | १६१ | गीताद्वितीयाध्यायमाहात्म्यम्, तत्रदेवशर्मवृत्तांतवर्णनम्. श्लो० ६२ ॥ |
| १७७ | १६२ | गीतातृतीयाध्यायमाहात्म्यवर्णने जडब्राह्मणवृत्तांतवर्णनम्. श्लो० ६० ॥ |

| अ० प० | विषयाः |
|---|---|
| १७८—१६३ | गीताचतुर्थाध्यायमाहात्म्यवर्णने वाराणसीस्थभरतकृतावलंबनतोबदर्योः कन्यात्वप्राप्तिवृत्तांतवर्णनम्. श्लो० ३८ ॥ |
| १७९—१६४ | गीतापंचमाध्यायमाहात्म्यवर्णने पुरुकुत्सपुरस्थपिंगलब्राह्मणतत्पत्नीवृत्तांतवर्णनम्. श्लो० २४ ॥ |
| १८०—१६४ | गीताषष्ठाध्यायमाहात्म्यवर्णने गोदावरीतीरवर्तिप्रतिष्ठानपुरस्थज्ञानश्रुतिराजरैक्यमहर्षिवृत्तान्तवर्णनम्. श्लो० १०४ ॥ |
| १८१—१६६ | गीतासप्तमाध्यायमाहात्म्यवर्णने पाटलिपुत्रस्थशंकुकर्णब्राह्मणवृत्तांतवर्णनम्. श्लो० ३४ ॥ |
| १८२—१६६ | गीताष्टमाध्यायमाहात्म्यवर्णने आमर्दकपुरस्थभावशर्मब्राह्मणवृत्तान्तवर्णनम्. श्लो० ३२ ॥ |
| १८३—१६७ | गीतानवमाध्यायमाहात्म्यवर्णने माहिष्मतीपुरीस्थमाधवब्राह्मणवृत्तान्तवर्णनम्. श्लो० ६० ॥ |
| १८४—१६८ | गीतादशमाध्यायमाहात्म्यवर्णने काशीपुरीस्थधीरधीविप्रवृत्तान्तवर्णनम्. श्लो० ९९ ॥ |
| १८५—१७० | गीतैकादशाध्यायमाहात्म्यवर्णने मेघकरनगरस्थसुनंदब्राह्मणवृत्तान्तवर्णनम्. श्लो० ११० ॥ |
| १८६—१७२ | गीताद्वादशाध्यायमाहात्म्यवर्णने कोल्हापुरस्थसिद्धसमाधिवृत्तांतवर्णनम्. श्लो० ६२ ॥ |
| १८७—१७३ | गीताद्वादशाध्यायमाहात्म्यवर्णने तुंगभद्रानदीतीरवर्तिहरिपुरस्थहरिदीक्षितब्राह्मणपत्न्यादुराचारायावृत्तांतवर्णनम्. श्लो० ६१ ॥ |
| १८८—१७४ | गीताचतुर्दशाध्यायमाहात्म्यवर्णने शशशुनीवृत्तांतवर्णनम्. श्लो० ४५ ॥ |
| १८९—१७५ | गीतापंचदशाध्यायमाहात्म्यवर्णने गौडदेशीयनरसिंहराजस्यतत्सेनिकस्य सरभभेरुंडस्यच वृत्तांतवर्णनम्. श्लो० ४६ ॥ |
| १९०—१७६ | गीताषोडशाध्यायमाहात्म्यवर्णने गुर्जरमंडलान्तर्गतसौराष्ट्रिकपुरस्थखड्गबाहुराजवृत्तान्तवर्णनम्. श्लो० ३४ ॥ |
| १९१—१७६ | गीतासप्तदशाध्यायमाहात्म्यवर्णने खड्गबाहुनृपसुतभृत्यस्य दुःशासनस्य वृत्तांतवर्णनम्. श्लो० २७ ॥ |
| १९२—१७७ | गीताष्टादशाध्यायमाहात्म्यवर्णने इंद्रवृत्तान्तवर्णनम्. श्लो० ६३ ॥ |
| १९३—१७८ | श्रीमद्भागवतमाहात्म्यवर्णनम्, तत्र सूतशौनकसंवादे नारदसनत्कुमारसंवादः, नारदेन भक्तिज्ञानवैराग्यवृत्तांतकथनम्, तत्र कलिदोषेण ज्ञानवैराग्ययोर्वार्द्धक्यम्, भक्त्याश्च वृंदावनप्रभावेण यौवनम्, भक्तिनारदसमागमे भक्तयानारदाग्रे स्वदुःखवृत्तांतनिवेदनम्. श्लो० ८४ ॥ |
| १९४—१७९ | नारदेन भक्तिं सांत्वयित्वा तद्दुःखनिवारणार्थमुपायं चिंतयित्वा नारदस्य सनकादिसमीपं प्रत्यागमनम्, सनकादिभिर्ज्ञानवैराग्ययोर्बलप्राप्तये भागवतालापकरणोपदेशकरणम्, तत्र भागवतस्य श्रेष्ठचवर्णनम्. श्लो० ७४ ॥ |
| १९५—१८१ | कुमाराणामुपदेशान्नारदस्य गंगाद्वारसमीपस्थक्रामदापुरे भृग्वादिभिः सहगमनम्, कुमारैर्भागवतमाहात्म्यवर्णनम्, भागवतसप्ताहपठनमाहात्म्यवर्णनम्, भगवतोद्धवाय भागवतोपदेशकरणम्, नारदाद्यैर्भागवतसप्ताहकरणम्, तत्र भक्तेरागमनम्, कुमारैर्भक्तेः स्थानदानम्. श्लो० ७८ ॥ |
| १९६—१८२ | भागवतमाहात्म्यवर्णने गोकर्णवृत्तांतवर्णनम्, तत्र तुंगभद्रानदीतीरवर्ति |

अ० पृ० विषयाः

कोहलपुरस्थस्यात्मदेवब्राह्मणस्य-पुत्राप्राप्तिखिन्नतयावनंगतस्य सिद्धेनसह समागमः, सिद्धेन तस्मै पुत्रप्राप्त्यर्थं फलदानम्, आत्मदेवेन धुंधुलीनाम्न्यै फलसमर्पणम्, धुंधुल्याप्रसूतिदुःखभीतया पतिं वंचयित्वा गुर्विणीवेषं विधाय अंगणस्यायागोः फलदानम्, स्वभगिन्यां प्रसूतायांतस्याः पुत्रमादायस्वस्याः प्रसूतिप्रसिद्धिकरणम्, तस्य पुत्रस्य धुंधुकारिनामकरणम्, मासत्रयानंतरं धेनोः सकाशाद्गोकर्णपुत्रप्रसूतिः, धुंधुकारिणा पितृपीडनम्, गोकर्णपुत्रेणात्मदेवस्य सांत्वनम्, गोकर्णोपदेशादात्मदेवस्य वनंगत्वा सत्संगेन मुक्तिप्राप्तिः. श्लो० ८६ ॥

१९७—१८४ धुंधुकारिपीडितायाधुंधुल्याःकूपेपतित्वामरणम्, गोकर्णस्य तां निर्हृत्यतीर्थयात्रार्थं गमनम्, धुंधुकारिणो वेश्याभिर्धनलोभेनवधकरणम्, तस्य पैशाच्यप्राप्तिश्च, कदाचित्तीर्थयात्रां विधाय गृहं प्रत्यागतेन गोकर्णेन स्वभ्रातुः पैशाच्यवस्थानिरीक्षणम्, तदुपरिगोकर्णेन तीर्थजलप्रक्षेपात्तस्य वागुत्पत्तौ पिशाचेनात्मवृत्तांतवर्णनम्, धुंधुकारिणोमुक्त्युपायार्थं गोकर्णेन ब्राह्मणविज्ञापनम्, ब्राह्मणैस्तन्मुक्त्युपायचिंतनाय सूर्यस्तुतिकरणम्, सूर्येण द्विजान्प्रति धुंधुकारिणो विमुक्तये भागवतसप्ताहाज्ञाकरणम्, सूर्याज्ञया गोकर्णद्वारा भागवतसप्ताहे संपूर्णे धुंधुकारिणो मोक्षप्राप्तिः, भागवतसप्ताहश्रवणायागतानामन्येषां द्विजानां विष्णुसारूप्यमुक्तिप्राप्तिपुरःसरं गोलोकप्राप्तिवर्णनम्. श्लो० ११४ ॥

१९८—१८६ सप्ताहपठनश्रवणविधिवर्णनम्, नारदसनत्कुमारादिसंवादे प्रचलति सत्यकस्मात्तत्रशुकागमनम्, शुकागमनोत्तरं विष्णुशंकरादीनामागमनम्, प्रह्लादादिकृतनृत्यगीतादिसमारंभः, तत्र भक्तिज्ञानवैराग्याणां नवरूपप्राप्तिपुरःसरं नर्तनम्, सप्ताहयज्ञेन प्रसन्नेन भगवतावरप्रदानम्, शौनकस्य भागवतस्य निर्माणत आरभ्य सप्ताहप्रवृत्तिकालविषयकशंकायांनिर्माणकालावधिसप्ताहप्रवृत्तिकालकथनम्, नैमिषारण्ये शौनकमहासत्रे तीर्थयात्रां पर्यटतो वलरामस्यागमनम्, वलरामेणोच्चासनस्थस्य सूतस्याविचार्यवधकरणम्, मुनीनां वचनमाकर्ण्य बलरामेण सूतपुत्रस्योग्रश्रवसः शास्त्रकथनविषयकसूचनम्, वलरामेण मुनीनां सुखाय बल्वलासुरस्य वधकरणम्, रोमहर्षणपुत्रेणोग्रश्रवसासूतेनावशिष्टपुराणकथनम्, व्यासेन सप्तदशपुराणानि विरच्याप्यतुष्यद्धृदयेन नारदोपदेशाद्भागवतपुराणनिर्माणम्, भागवतमाहात्म्यवर्णनम्. श्लो० १२१ ॥

१९९—१८८ कालिंदीमाहात्म्यवर्णने नारदपर्वतयोः शिबिराजस्य संवादे नारदेनेंद्रकृतयज्ञवृत्तांतवर्णनम्. श्लो० ४७ ॥

२००—१८९ इंद्रयागसमाप्तिवर्णनपूर्वकं शिवशर्मब्राह्मणगृहे इंद्रजन्मवर्णनम्, तस्य विष्णुनामकरणम्, तस्य विष्णुशर्मणः पित्रासहेंद्रप्रस्थमागत्य तत्र पूर्वजन्मनि कृतस्य यागस्य स्मरणम्, पित्रे सर्वपूर्ववृत्तांतं निवेद्यतत्रत्यतीर्थदर्शनम्, इंद्रवाक्याच्छिवशर्मणा निगमोद्बोधकतीर्थे स्नानार्थमुद्योगकरणम्, तत्रभिल्लसिंहयोर्मुक्तिदर्शनम्. इंद्रप्रस्थक्षेत्रमाहात्म्यम्. श्लो० ११८ ॥

२०१—१९१ शिवर्मणो निगमोद्बोधकतीर्थे स्नानमात्रेण जातिस्मरत्वप्राप्तिः, शिवशर्मणाऽऽत्मनः पूर्वजन्मवृत्तान्तवर्णनम्, तत्र शरभवैश्यस्यगृहेदेवलर्षिगमनम्, देवलेन शरभं प्रतिपुत्रप्राप्त्युपायकथनम्. श्लो० १०४ ॥

२०२—१९३ दिलीपसुदक्षिणाभ्यां पुत्रप्राप्त्युपायजिज्ञासया वसिष्ठाश्रमं प्रतिगमनम्, वसिष्ठेन तस्मै गोसेवाज्ञाकरणम्. श्लो० ५८ ॥

अ० प०　　विषयाः

२०३--१९४ दिलीपेन गोसेवाकरणम्. तत्कृतांसेवांगवा मायया सिंहमुत्पाद्यपरीक्ष्य तस्मै पुत्रप्राप्तिकरवरप्रदानवर्णनम्. श्लो० ६९ ॥

२०४--१९६ शरभस्यचण्डिकाराधनम्, चंडिकावचनाच्छरभस्येंद्रप्रस्थं प्रत्यागत्य निगमोद्बोधकतीर्थे स्नानदानादिना पुत्रप्राप्तिः, वार्द्धक्येशरभस्येंद्रप्रस्थंप्रति गमनम्, तत्र तस्य ज्वरप्राप्तौ केनचित्पांथेन शिबिकामानाय्य तस्यामारुह्य तेनैव सह स्वगृहं प्रत्यागमने मध्येमार्गेकेनचिद्राक्षसेन सह समागमः, तेन राक्षसेन तदीयवाहभक्षणम्, शरभसमीपवर्तिनिगमोद्बोधकतीर्थजलप्राशनेन तस्य राक्षसस्य पूर्वजन्मवृत्तान्तस्मरणम्, शरभराक्षसयोःसंवादः, वाहानांपथिकस्यच कुबेरलोकावाप्तिः, राक्षसेन शरभं पृष्ठमारोप्येंद्रप्रस्थंप्रति प्रत्यावृत्त्यागमनम्, इंद्रप्रस्थेशरभंप्रतिपुत्रस्यागमनम्, तत्रतीर्थेशरभवैश्यस्यमरणाद्वैकुंठलोकावाप्तिः, पुत्रस्यच रक्षसासहेंद्रप्रस्थे स्थितिकरणम्. श्लो० १४३ ॥

२०५--१९८ इंद्रप्रस्थे निगमोद्बोधकतीर्थपंकनिमग्नायागोरुद्धरणं कुर्वतोराक्षसस्यांवुहस्तिना जलमध्येनयनान्मृत्युप्राप्त्यनंतरंमुक्तिः, शरभपुत्रस्य तत्रतीर्थे वासवर्णनम्, दुर्वासःशापाच्छरभपुत्रस्य शिवशर्मत्वप्राप्तिः, शिवशर्मणो निगमोद्बोधकतीर्थेदेहत्यागान्मुक्तिप्राप्तिः. श्लो० ५१ ॥

२०६--१९९ इन्द्रप्रस्थस्थद्वारकामाहात्म्यवर्णनम्, तत्रकांपिल्यनगरवासिपुष्पेपुब्राह्मणचारित्रम्,तद्रूपमुग्धपौरस्त्रीणांविषभक्षणात्पैशाच्यप्राप्त्यनंतरं राक्षसीत्वप्राप्तिः. श्लो० ६३॥

२०७--२०१ तासामुद्धारवर्णनप्रसंगेन विमलविप्रवृत्तांतवर्णनम्, विमलस्येंद्रप्रस्थस्थनिगमोद्बोधकतीर्थस्नानात्पुत्रवरप्राप्तिः, तत्तीर्थादाश्रमंजिगमिषोर्मध्येमार्गेमित्रप्राप्तिः. श्लो० ६९ ॥

२०८--२०२ विमलस्यतेन मित्रेणसह पुनरिंद्रप्रस्थस्थद्वारकांप्रतिगत्वास्नानेन विष्णुभक्तिप्राप्तिवर्णनम्. मार्गेव्रजतोविमलस्य कमंडलुगतजलपानाद्राक्षसीनांमुक्तिवर्णनम्. श्लो० ६८ ॥

२०९--२०३ इंद्रप्रस्थस्यकोशलामाहात्म्यवर्णने मुकुंदद्विजवृत्तान्तवर्णनम्. तत्र मुकुंदस्य नापितचौरेणवधे कृतेवेदायनस्यारगुरोगमनम्, वेदायनेनतन्मातुः शोकापनोदनायात्मस्वरूपवर्णनम्. श्लो० ५९ ॥

२१०--२०४ मुकुंदस्यकोशलातीर्थेऽस्थिपतनाद्विमानमारुह्य मार्गप्रसुप्तयोर्वेदायनगुरुकनिष्ठभ्रात्रोःसमीपंप्रत्यागमनम्, गुरुप्रश्नेसति मुकुंदेनस्वानुभूतयमयातनावर्णनम्, कोशलातीर्थेऽस्थिपतनकारणवर्णनम्. श्लो० ७० ॥

२११--२०६ चंडकनामकचौरनापितस्यब्राह्मणवधाद्राजाज्ञया शिरश्छेदोत्तरं सर्पत्वप्राप्तिः, मातृपित्रास्थिपेटकं गृहीत्वागच्छतः कस्यचिद्ब्राह्मणस्यसर्पवासदेशस्थितौ सर्पणास्थिपेटकेप्रवेशकरणम्, ब्राह्मणेन कोशलायामस्थिविसर्जनेकृते सतितत्साहचर्येण सर्पस्यापिविसर्जनम्, कोशलाप्रभावेण सर्पस्यमोक्षावाप्तिः. श्लो० ५० ॥

२१२--२०६ नारायणाश्रमगामिवटूनांतत्रैववासः, कस्यचिद्वटोर्नारायणाश्रमंगच्छतोनारायणेन विप्रवेषंधृत्वानिवर्तनम्, तस्यविष्णुवचनात्कोशलातीर्थे परावृत्त्यागमनम्. तत्रतनुत्यजां तेषांभगवत्प्रसादान्मुक्तिप्राप्तिवर्णनम्. श्लो० ५५ ॥

२१३--२०८ मधुवनस्थविश्रांतितीर्थमाहात्म्यवर्णनम्, तत्रकिरातनगरस्थकुशलब्राह्मणपत्नीवृत्तान्तवर्णनम्, तत्र तस्यादुश्चरित्रेण गोधात्वप्राप्तिः, तत्पुत्रस्यतदुद्धरणार्थं पितुराज्ञाग्रहणम्. श्लो० ८२ ॥

२१४--२०९ पितृवाक्यात्पुत्रेण मातरमुद्दिश्यश्राद्धकरणम्, तेनतस्यमातुःपितामहादीनांच मुक्तिप्राप्तिः, तस्यापितुर्विष्णुलोकगमनम्. श्लो० १११ ॥

| अ० | प० | विषयाः |
|---|---|---|
| २१५ | २११ | तस्यमुनिपुत्रस्य स्वैरिण्यांजन्मग्रहणकारणवर्णनम्, तत्र चंद्रकृतबृहस्पतिभार्याहरणवृत्तांतवर्णनम्, तत्रबुधेन तस्यकुण्डत्वप्राप्तिरूपशापदानम्. श्लो० ५८ |
| २१६ | २१२ | मधुवनस्थबदरिकाश्रममाहात्म्यवर्णनम्, तत्रमगधदेशस्थदेवदासब्राह्मण चरित्रवर्णनम्. तत्र कलिंगराजवृत्तान्तवर्णनम्. श्लो० १०१ ॥ |
| २१७ | २१४ | इंद्रप्रस्थांतर्गतहरिद्वारमाहात्म्यम्, तत्रकालिंगश्वपचवृत्तान्तवर्णनम्. श्लो० ४९ |
| २१८ | २१५ | इंद्रप्रस्थस्थपुष्करमाहात्म्यवर्णनम्, तत्रपुण्डरीकवृत्तान्तवर्णनम्, तद्भ्रातुर्भरतस्यपुष्करसेवया विमानावाप्तिवर्णनम्. श्लो० ५४ ॥ |
| २१९ | २१६ | भरतपुंडरीकयोःसंवादे भरतेनात्मपुण्यंवर्णयित्वा स्वर्गप्रतिगमनम्. पुंडरीकस्यपुष्करसेवनप्रभावेनतद्गृहेविष्णोःस्थितिः,पुंडरीकस्यमुक्तिप्राप्तिवर्णनम्.श्लो०५२ |
| २२० | २१७ | इंद्रप्रस्थस्थप्रयागतीर्थमाहात्म्यवर्णने नर्मदातीरवर्त्तिमाहिष्मतीस्थमोहिनीवेश्यावृत्तान्तवर्णनम्, तस्याश्चमरणावसरे प्रयागजलपानाद्द्रविडदेशराजस्यवीरवर्मणोभार्यात्वप्राप्तिः. श्लो० ५४ ॥ |
| २२१ | २१८ | सखीगृहस्थितपुस्तकनिरीक्षीणात्तस्याः पूर्वजन्मस्मृतौ भर्त्रासहेंद्रप्रस्थस्थप्रयागतीर्थगमनम्, तत्र वीरवर्मतत्पत्नीभ्यां हरिहरस्तोत्रकरणम्, तत्प्रभावात्तयो वैंकुंठावाप्तिवर्णनम्. श्लो० ५३ ॥ |
| २२२ | २१९ | इंद्रप्रस्थस्थकाशीमाहात्म्यवर्णनम्, तत्रत्यशिंशपातरुस्थितकाकसर्पयोर्वृत्तांतवर्णनम्, इंद्रप्रस्थस्थगोकर्णतीर्थमाहात्म्यवर्णने कर्कटभिल्लभार्याया जरानाम्न्याश्चरित्रकथनम्, इंद्रप्रस्थस्थशिवकांचीमाहात्म्यवर्णने हेरंबनामकब्राह्मणवृत्तांतवर्णनम्, नारदस्यशिबिंप्रतिशक्रप्रस्थमाहात्म्यमुक्त्वा स्वर्गेगमनम्, इंद्रप्रस्थमाहात्म्यश्रवणफलम्, युधिष्ठिरेणेंद्रप्रस्थं गत्वा तत्रराजसूययज्ञकरणम्. भीमकुंडमाहात्म्यकथनम्. श्लो० ९० ॥ |
| २२३ | २२१ | नारायणमहामंत्ररत्नोपदेशवर्णनम्. श्लो० ८० ॥ |
| २२४ | २२२ | शिवपार्वतीसंवादे भगवद्भक्तिमाहात्म्येसुदर्शनादिमाहात्म्यवर्णनपूर्वकमंकनमाहात्म्यकथनम्. श्लो० ८० ॥ |
| २२५ | २२३ | ऊर्ध्वपुण्ड्रमाहात्म्यविधिवर्णनम्. श्लो० ५९ ॥ |
| २२६ | २२४ | मंत्रतदर्थोपदेशविधिमाहात्म्यवर्णनम्. श्लो० ९३ ॥ |
| २२७ | २२६ | सविस्तरं मंत्रार्थोपदेशवर्णने त्रिपाद्विभूतिवर्णनम्. श्लो० ८० ॥ |
| २२८ | २२७ | सविस्तरं मन्त्रार्थोपदेशवर्णने परमव्योमादिवर्णनम्. श्लो० १०७ ॥ |
| २२९ | २२९ | देवसर्गवर्णने विष्णुव्यूहभेदवर्णनम्. श्लो० १८० ॥ |
| २३० | २३२ | विष्णोर्मत्स्यावतारकथावर्णनम्. श्लो० ३१ ॥ |
| २३१ | २३३ | कूर्मावतारकथावर्णनम्. तत्र दुर्वाससःशापादिंद्रलक्ष्मीविनाशे विष्णुना देवान्प्रति समुद्रमंथनायाज्ञाकरणम्. श्लो० ४८ ॥ |
| २३२ | २३४ | विष्णोराज्ञया देवदानवैर्मथने समारब्धेसति समुद्रान्महाविषप्रभृतिलक्ष्म्यंतरत्नोत्पत्तिवर्णनम्. श्लो० ७० ॥ |
| २३३ | २३५ | देवादिभिरेकादश्युपवासकरणवर्णनम्. श्लो० १९ ॥ |
| २३४ | २३६ | द्वादशीमाहात्म्यवर्णनम्. श्लो० ३९ ॥ |
| २३५ | २३६ | पाषंडिलक्षणवर्णनम्. शिवस्य कपालभस्मास्थिधारणकारणवर्णनम्. श्लो० ६४॥ |
| २३६ | २३८ | तामसादिशास्त्रपरिगणनम्. श्लो० २७ ॥ |
| २३७ | २३८ | वराहावतारकथावर्णनम्. श्लो० २९ ॥ |

अ० प० — विषयाः

२३८—२३९ नृसिंहप्रादुर्भावकथावर्णनम्. श्लो० १५५ ॥

२३९—२४२ वामनप्रादुर्भाववर्णनम्, तत्र बलिदैत्यपराभूतदेवप्रार्थनयाभगवतोऽदितिगर्भ-प्रवेशः श्लो० ३१ ॥

२४०—२४२ वामनेन बलेर्भूग्रहणादिवृत्तांतवर्णनम्. श्लो० ६० ॥

२४१—२४३ जामदग्न्यावतारकथावर्णनम्. श्लो० ८१ ॥

२४२—२४५ श्रीरामावताररामायणकथावर्णनम्. तत्र रामस्य जन्मप्रभृतिरावणवधोत्तरकालीनायोध्याप्रवेशांतकथावर्णनम्. श्लो० ३६९ ॥

२४३—२५२ रामस्य राज्याभिषेकादिविश्वरूपदर्शनांतचरित्रवर्णनम्. श्लो० ५३ ॥

२४४—२५३ रामस्य राज्योपभोगपूर्वकसंपूर्णचरित्रवर्णनम्. श्लो० ५३ ॥

२४५—२५४ श्रीकृष्णावतारकथावर्णनम्. तत्र श्रीकृष्णस्यजन्मादिकंसवधांतकथावर्णनम्. श्लो० ३९२ ॥

२४६—२६२ कृष्णस्योपनयनादिवृत्तवर्णनपूर्वकं मुचुकुंदमोक्षणांतकथावर्णनम्. श्लो० ७० ॥

२४७—२६३ द्वारकाप्रवेशरुक्मिण्यादिहरणवैदर्भसेनाविध्वंसनवर्णनम्. श्लो० ४२ ॥

२४८—२६४ रुक्मिणीविवाहवर्णनम्. श्लो० १९ ॥

२४९—२६४ सत्यापरिणयनवृत्तांतवर्णनम्. श्लो० १११ ॥

२५०—२६६ अनिरुद्धविवाहप्रसंगेन बाणासुरसंग्रामवर्णनम्. श्लो० २१ ॥

२५१—२६८ पौण्ड्रकवासुदेवनिग्रहणम्, तत्सुतस्य दंडपाणेः कृष्णमुद्दिश्य कृत्यापचारे सतिकृष्णप्रेरितचक्रदर्शनेन कृत्ययापरावृत्य वाराणसीनामकदंडपाणिपुरीदहनम्. श्लो० २८ ॥

२५२—२६८ जरासंधं भीमद्वारा निहत्य तेनबंदीकृतानांपार्थिवानां मोचनम्. इंद्रप्रस्थेशिशुपालवधः, दंतवक्रस्य युद्धेवधानंतरं कृष्णस्य नंदगोकुले सर्वेषांसंगमः, पश्चाद्द्वारकायां प्रवेशः, सुदामसत्कारकरणम्. भारतयुद्धवृत्तांतः, ब्राह्मणबालकसंजीवनम्, कृष्णसंतानवर्णनम्, मौसलवृत्तांतवर्णनम्, कृष्णस्य स्वधामगमनम्, कृष्णपत्नीनांचौरैर्हरणम्, कृष्णमाहात्म्यवर्णनम्. श्लो० ११५ ॥

२५३—२७१ विष्णुपूजाविधानवैष्णवाचारवर्णनम्. श्लो० १८० ॥

२५४—२७४ रामनाममाहात्म्यवर्णनेऽष्टोत्तरशतनामस्तोत्रवर्णनम्. श्लो० ६९ ॥

२५५—२७४ श्रेष्ठदेवपरीक्षासमये भृगुशापेन महादेवस्य योनिलिंगस्वरूपप्राप्तिवर्णनम्, ब्रह्मणोऽपूज्यत्वप्राप्तिवर्णनंच, सर्वदेवेषु विष्णोः श्रैष्ठ्यवर्णनम्, भृगुकृतभगवत्स्तुतिः, पद्मपुराणपठनफलवर्णनम्. श्लो० १२७ ॥

इति पाद्मपुराणोत्तरखण्डस्थविषयानुक्रमणिका संपूर्णा ॥ ६ ॥

## अथ पाद्मपुराणस्थक्रियायोगसारखण्डस्थविषयानुक्रमणिका ।

१—१ सूतशौनकसंवादे कलिकालीनलोकोद्दिधीर्षया प्रश्ने जैमिनिव्याससंवादवर्णनम्. व्यासेन जैमिनये क्रियायोगसारवर्णनोपक्रमवर्णनम्. श्लो० ३८ ॥

२—१ भगवद्भक्तिवर्णने सृष्ट्यादिवर्णनम्. ब्रह्मकृतविष्णुस्तुतिः, भगवता ब्रह्मणेवैष्णवलक्षणकथनम्. श्लो० १११ ॥

३—३ गंगाद्वारमाहात्म्यवर्णने मनोभद्रराजपुत्रयोर्वृत्तांतवर्णनम्, तत्र गृध्रेणागत्य तयोः पूर्वजन्मवृत्तांतवर्णनम्. श्लो० ९८ ॥

| अ० | प० | विषयाः |
| --- | --- | --- |
| ४— | ४ | प्रयागमाहात्म्ये प्रणिधिवैश्यवृत्तांतवर्णनम्, तत्रधनप्रशंसा, प्रणिधिवैश्यभार्याप्राप्तिकामस्य कस्यचिच्छ्वपचस्य प्रयागे स्नानात्प्रणिधिवैश्यरूपावाप्तिः, विष्णोराज्ञया पद्मावत्या एकाकारपतिद्वयेन सह वैकुंठगमनम्, तत्रपद्मावतीविष्णुदूतसंवादे बृहद्ध्वजराक्षसभीमकेशराजपत्न्योर्वृत्तांतः. श्लो० ११४॥ |
| ५— | ७ | विक्रमराजपुत्रमाधववृत्तांतवर्णनम्, माधवस्य मृगयार्थंवने गतस्य चंद्रकलादर्शनम्, चंद्रकलया प्लक्षद्वीपस्थगुणाकरराजपुत्रीसुलोचनावृत्तांतवर्णनम्, चंद्रकलावचनान्माधवस्य श्रेष्ठहयमारुह्यजलधिमुल्लंघ्य प्लक्षद्वीपंगत्वा तत्र गंधिनीगृहेऽवस्थितिकरणम्, मालापुष्पेषु निजकार्यं विलिख्य गंधिनीद्वारा सुलोचनार्थं सांगुलीयमालाप्रेषणम्, सुलोचनयाराजपुत्रवृत्तांतं पठित्वास्वप्राप्तिसंकेतं विलिख्य प्रेषणम्, स्नानव्याजेनगंधिनीगृहमागत्य तत्र माधवदर्शनम्, सुलोचनाया यक्षप्रदक्षिणासंकेतकाले माधवस्य निद्राप्राप्तिः, प्रचेष्टेन तयोः संकेतं विज्ञाय तस्मिन्काले तस्याः सुलोचनाया हरणम्, सुलोचनया प्रचेष्टं प्रति वचनेन वंचनम्, प्रचेष्टस्य तत्करकंकणंगृहीत्वा स्वगृहं प्रति गमनम्, सुलोचनाया गंगासागरसंगमे गमनम्, तत्र सुषेणराजसभायां पुरुषवेषं विधाय सुलोचनाया गमनम्, तत्र वीरवरनाम्ना प्रसिद्धिकरणपूर्वकं तस्य सेवाकरणवर्णनम्. श्लो० २०४ ॥ |
| ६— | ११ | तत्र वीरवरेण भीमनादनामकगंडकनाशनम्. गंडकस्य गंगासागरतीर्थे देहापाताद्दिव्यरूपावाप्तिः, वीरवरपृष्टेन गंडकेन स्वकीयपूर्वजन्मवृत्तांतं वर्णयित्वा स्वर्गमनम्, राज्ञा सुषेणेन वीरवरेण गंडकोहत इति श्रुत्वा तस्मै जयन्तीनाम स्वकन्यादानम्, जयंत्या सह वीरवरवेषधारिण्याः सुलोचनायास्तपःकरणम्, गंगायां तनुत्यागोद्यतस्य प्रचेष्टस्य वीरवराज्ञया कारायां स्थापनम्, गुणाकरेण राज्ञाकन्याहरणं दृष्ट्वातत्कृते शोककरणम, विद्याधरस्य सुलोचनाप्राप्तये गंगाब्धिसंगमे तनुत्यागोद्यतस्य वीरवरेण निवारणम्, तस्य तत्रैव स्थितिः, माधवस्य निद्रोत्थितस्य शोकपूर्वकं तदर्थं गंगासागरसंगमे तनुत्यागोद्यतस्य वीरवरेण सहसंभाषणम्, पश्चात्तं प्रति तनुत्यागान्निवर्त्यांतःपुरं गत्वास्त्रीवेषं विधायात्मनो दर्शनम्, माधवेन तयासह गांधर्वविवाहकरणम्, तेनसह सुलोचनायाः सुषेणसभां प्रति गमनम्, सुषेणेन माधवाय विवाहविधिना जयंतीकन्यादानम्, तत्र माधवस्य किंचित्कालं स्थितिः, प्रचेष्टस्य दोषं विचार्य निरसनम्, माधवस्य सांसारिकभोगानुपभुज्य विरागोत्पत्तौ विश्वकर्मतः शिलामयीं विष्णुमूर्तिंनिर्माय तद्भक्तिकरणम्, माधवकृतविष्णुस्तुतिवर्णनम्, माधवस्य मोक्षप्राप्तिवर्णनम्. श्लो० २०४ ॥ |
| ७— | १४ | गंगामाहात्म्यवर्णने धर्मस्वब्राह्मणवृत्तांतवर्णनम्. तत्र धर्मस्वेन गंगाजलं गृहीत्वा पथि गच्छता बलीवर्दविषाणविदारितस्य कालकल्पस्य मरणं दृष्ट्वातस्योपरिगंगाजलसेचनम्, अग्रेगत्वा यमदूतनिरीक्षणम्, तैः सह धर्मस्वस्य संवादः, यमदूतैर्निजवृत्तांतनिवेदनम्, विष्णुदूतसंवादवर्णनपूर्वकगंगामाहात्म्यवर्णनम्, धर्मस्वेन गंगास्तोत्रकरणम्, गंगयाविर्भूय धर्मस्वाय वरप्रदानम्, धर्मस्वस्य मोक्षप्राप्तिः. श्लो० १२८ ॥ |
| ८— | १७ | गंगामाहात्म्यवर्णने शक्रप्रियायाःपद्मगंधाया वृत्तांतवर्णनम्, गंगायामस्थिपतनात्तस्याः शक्रप्रियत्वकथनम्. श्लो० ११० ॥ |
| ९— | १९ | गंगामाहात्म्यवर्णने यात्राविधिवर्णनम्, तत्र सत्यधर्मराजविजयाराज्ञ्योर्वृत्तांतवर्णनम्, तयोर्भेकत्वप्राप्तौ सर्पेणभक्षणेपि गंगानामग्रहणमात्रेण मुक्तिवर्णनम्. श्लो० १६१ ॥ |

| अ० | प० | विषयाः |
|---|---|---|
| १० | २० | विष्णुपूजामाहात्म्यवर्णनम्, तत्र पूजाविधानवर्णनम्, तत्रार्यावर्तस्थसुवर्ण भूपचरित्रवर्णनम्, वेश्यादत्तंभूपतच्चंपकपुष्पंनिरीक्ष्येश्वरार्पणबुद्ध्या विमुंचतः मरणसमये विष्णुदूतैः सुवर्णस्य वैकुंठं प्रतिनयनम्. श्लो० ७८ ॥ |
| ११ | २३ | विष्णुपूजाविधिवर्णनम्. श्लो० १७० ॥ |
| १२ | २६ | फाल्गुनादिवैशाखांतमासेषु श्रीकृष्णपूजाविधिमाहात्म्यवर्णनम्, अश्वत्थमाहात्म्यवर्णने धनंजयनामब्राह्मणवृत्तांतवर्णनम्. श्लो० १२० ॥ |
| १३ | २८ | ज्येष्ठादिकार्तिकांतमासेषुभगवत्पूजाविधिमाहात्म्यवर्णनम्, कार्तिके पद्मपुष्पमाहात्म्यवर्णने प्रजानामकब्राह्मणवृत्तांतवर्णनम्. श्लो० १६९ ॥ |
| १४ | ३१ | मार्गशीर्षादिमाघांतमासेषु भगवत्पूजाविधिमाहात्म्यवर्णनम्. श्लो० ४३ ॥ |
| १५ | ३२ | भगवन्नाममाहात्म्यवर्णने परशुवैश्यपत्न्या जीवंत्याख्यायाश्चरित्रवर्णनम्, शुकपाठितरामनामप्रभावात्तस्यामुक्तिः,सर्वनामापेक्षया, रामनाम्नो महत्त्ववर्णनम्. श्लो० १०७ ॥ |
| १६ | ३४ | हरिभक्तिमाहात्म्यवर्णने चक्रिकनामकशबरवृत्तांतवर्णनम्, तस्य हरये मुखस्थफलसमर्पणतीव्रभक्त्या हरिप्रसादान्मुक्तिप्राप्तिवर्णनम्. श्लो० ५८ ॥ |
| १७ | ३५ | भगवद्भक्तिमाहात्म्यवर्णने भद्रतनुब्राह्मणवृत्तांतवर्णनम्, तत्र तस्य वेश्यारक्तत्वम्, वेश्योपदेशेन वैराग्योत्पत्तौ मार्कंडेयं प्रति शरणगमनम्. मार्कंडेयेन दांतसमीपे तस्य प्रेषणम्. दांतेन भद्रतनोर्मोहादिलक्षणवर्णनम् विष्णोरष्टोत्तरशतनामकथनं च, दांतानुज्ञया भद्रतनुना हरिभक्तिकरणाद्धरेः प्रादुर्भावः, भद्रतनुना भगवत्स्तुतिकरणम्, भगवता भद्रतनोः सख्यकरणम्, दांतेन गुरुणा भद्रतनोर्भर्त्सनायां कृतायां भद्रतनुना दांताय गुरवे भगवतो दर्शनकरणम्, भक्तिफलार्थं देवकृतभारतवर्षप्रशंसा. श्लो० २६५ ॥ |
| १८ | ३९ | पुरुषोत्तमजगन्नाथक्षेत्रमाहात्म्यवर्णनम्. कृष्णबलरामसुभद्रादर्शनमाहिमा. श्लो० ५५॥ |
| १९ | ४० | भगवदर्थे वस्तुसमर्पणमाहात्म्यवर्णने दस्युवृत्तेरुर्वीशुब्राह्मणस्य वृत्तांतवर्णनम्, विष्णुनैवेद्यमाहात्म्यवर्णने सर्वजनिनामकब्राह्मणवृत्तांतवर्णनम्, सर्वजनिना स्वप्ने विष्णुं दृष्ट्वा स्तोत्रकरणम्, भगवतासर्वजनेः पूर्वजन्मवृत्तान्तवर्णनम्, भगवता सर्वजनये स्वस्य रोषकराणां तोषकराणांचवर्णनम्; हरिपूजाकर्तृमाहात्म्यवर्णनम्. श्लो० ११७ ॥ |
| २० | ४३ | दानमाहात्म्यवर्णने हास्तिनपुरस्थरतिविदग्धावेश्याक्षेमंकरीब्राह्मणीहरिशर्मब्राह्मणानांवृत्तांतवर्णनम्. दानप्रभावात्तेषामुत्तमलोकावाप्तिः, हरिशर्मणोन्नदानाभावात्क्षुत्प्राप्तौविष्णुना तस्य ब्रह्मसमीपे प्रेषणम्, ब्रह्मणा तस्मै विविधदानमाहात्म्यवर्णनम्. श्लो० १६० ॥ |
| २१ | ४५ | ब्रह्मणा हरिशर्मणे विविधदानपात्रवर्णनम्, ब्राह्मणपादोदकमाहात्म्यवर्णने भद्रक्रियब्राह्मणचरणोदकस्पर्शात्कस्यचिच्छुनो मुक्तिवर्णनम्, तेन शुना भद्रक्रियायाऽऽत्मनः पूर्वजन्मवृत्तान्तवर्णनम्. तत्रराजनीतिवर्णनम्. ब्रह्माज्ञया भद्रक्रियस्य दीक्षितं पुत्रंप्रति स्वप्न आविर्भूय दानानुज्ञाकरणम्, दीक्षितेन पुत्रेणान्नजलदानाद्भद्रक्रियस्य मुक्तिः, अन्नजलदानमाहात्म्यवर्णनम्. श्लो० १३४ ॥ |
| २२ | ४८ | एकादशीमाहात्म्यवर्णनम्. तत्र पापपुरुषांगविभागवर्णनम्. विष्णुनैकादशीं निर्माय यमलोकस्थपापिजनोद्धरणम्. पापपुरुषायैकादशीदिने निवासायान्नरूपस्थलदानम्, एकादशीव्रतस्य सर्वव्रतापेक्षया श्रेष्ठत्ववर्णनम्, संक्षेपेणैकादशीव्रतविधिवर्णनम्. श्लो० १४८ ॥ |

| अ० | प० | विषयाः |
|---|---|---|
| २३— | ५० | एकादशीव्रतमाहात्म्यवर्णने कोचरशनामकभूपतिसुप्राज्ञानामकतत्पत्न्योर्वृत्तान्तवर्णनम्, तत्र शौरिब्राह्मणपृष्टया सुप्राज्ञाराज्ञ्या तस्मै स्वस्याराज्ञश्च पूर्वजन्मवृत्तांतवर्णनम्, पूर्वजन्मनि वेश्यायाः सुप्राज्ञाया जारस्यच कोचरशस्यैकादशीप्रभावाद्यमलोकं गत्वायमेन सत्कारकरणम्. यमलोकस्थसुकृतिदुष्कृतिजनानुभूतसुखदुःखावस्थावर्णनम्, कोचरशसुप्राज्ञयोरेकादशीव्रतप्रभावाद्वैकुंठावाप्तिवर्णनम्. श्लो० १७८ ॥ |
| २४— | ५४ | तुलसीवृक्षधात्रीवृक्षमाहात्म्यवर्णनम्. ६७ ॥ |
| २५— | ५५ | तुलसीमाहात्म्यवर्णने पवित्रब्राह्मणानपत्यब्राह्मणयोश्चरित्रवर्णनम्, तयोर्गृहे लोमशमुनेरागमनम्, ताभ्यांतस्यातिथ्यसत्कारकरणम्. लोमशेनातिथिसपर्यामाहात्म्यकथनं, तत्र ज्ञानभद्रयोगिवृत्तांतवर्णनम्, लोमशस्य पुरो बिलान्निर्गत्यागच्छतः कस्यचिन्मूषिकस्य पवित्रेण घातनम्, तदा लोमशेन तस्य मुखे कर्णयोःशीर्षे च तुलसीस्पर्शनम्, तेन तस्य मूषिकस्य मोक्षप्राप्तिः. ८७ ॥ |
| २६— | ५६ | कलियुगे वर्तमानानां जनानामवस्थावर्णनम्. कलौमनःशुद्ध्या भगवते सर्वकर्मसमर्पणवर्णनम्, पद्मपुराणमाहात्म्यवर्णनम्. ५५ ॥ |


इति क्रियाखंडस्थविषयानुक्रमणिका संपूर्णा ॥ ७ ॥

ॐश्रीविष्णवेनमः ॥ ॐस्वच्छंचंद्रावदातंकरिकरमकरक्षोभसंजातफेनं ब्रह्मोद्भूतिप्रसक्तैर्व्रतनियमपरैःसेवितंविप्रमुख्यैः ॥ ॐकारालंकृतेनत्रिभुवनगुरु णाब्रह्मणादृष्टिपूतं संभोगाभोगरम्यंजलमशुभहरंपौष्करंवःपुनातु ॥ १ ॥ सूतमेकांतमासीनंव्यासशिष्यंमहामतिः ॥ लोमहर्षणनामावाउग्रश्रवसमाह तत् ॥ २ ॥ ऋषीणामाश्रमांस्तातगत्वाधर्मान्समासतः ॥ पृच्छतांविस्तराद्ब्रूहियन्मत्तःश्रुतवानसि ॥ ३ ॥ वेदव्यासान्मयापुत्रपुराणान्यखिलानिच ॥ तवा ख्यातानिप्राप्तानिमुनिभ्योवदविस्तरात् ॥ ४ ॥ प्रयागेमुनिवर्यैश्चयथापृष्टःस्वयंप्रभुः ॥ पृष्टेनचानुशिष्टास्तेमुनयोधर्मकांक्षिणः ॥ ५ ॥ देशंपुण्यमभीप्सं तोविभुनाचहितैषिणा ॥ सुनाभंदिव्यरूपंचसत्यगंशुभविक्रमं ॥६॥ अनौपम्यमिदंचक्रंवर्तमानमतंद्रिताः॥पृष्टतोयातनियमात्पदंप्राप्स्यथयद्धितम् ॥ ७ ॥ गच्छतोधर्मचक्रस्ययत्रनेमिर्विशीर्यते ॥ पुण्यःसदेशोमंतव्यइत्युवाचस्वयंप्रभुः ॥ ८ ॥ उक्त्वाचैवमृषीन्सर्वानदृश्यत्वमगात्पुनः ॥ गंगावर्तसमाहारोनेमि र्यत्रव्यशीर्यत ॥ ९ ॥ ईजिरेदीर्घसत्रेणऋषयोनैमिषेतदा ॥ तत्रगत्वातुतान्ब्रूहिपृच्छतोधर्मसंशयान् ॥ १० ॥ उग्रश्रवास्ततोगत्वाज्ञानविन्मुनिपुंगवा न् ॥ अभिगम्योपसंगृह्यनमस्कृत्वाकृतांजलिः ॥ ११ ॥ तोषयामासमेधावीप्रणिपातेनतानृषीन् ॥ तेचापिसत्रिणःप्रीताःससदस्यामहात्मने ॥ १२ ॥ तस्मैसमेत्यपूजांचयथावत्प्रतिपेदिरे ॥ ऋषयऊचुः ॥ कुतस्त्वमागतःसूतकस्माद्देशादिहागतः ॥ १३ ॥ कारणंचागमेब्रूहिवृंदारकसमद्युते ॥ सूत उवाच ॥ पित्राहंतुसमादिष्टोव्यासशिष्येणधीमता ॥ १४ ॥ शुश्रूषस्वमुनीन्गत्वायत्तेपृच्छंतितद्वद ॥ वदंतुभगवंतोमांकथयामिकथांतुयां ॥ १५ ॥ पुराणंचेतिहासंवाधर्मानथपृथग्विधान् ॥ तांगिरंमधुरांतस्यशुश्रुवुर्ऋषिसत्तमाः ॥ १६ ॥ अथतेषांपुराणस्यशुश्रूषासमपद्यत ॥ दृष्ट्वातमतिविश्वस्तंविद्वां संलौमहर्षणिं ॥ १७ ॥ तस्मिन्सत्रेकुलपतिस्सर्वशास्त्रविशारदः ॥ शौनकोनाममेधावीविज्ञानारण्यकेगुरुः ॥ १८ ॥ इत्थंतद्भावमालंब्यधर्मान्शुश्रूषुराह तम् ॥ त्वयासूतमहाबुद्धेभगवान्ब्रह्मवित्तमः ॥ १९ ॥ इतिहासपुराणार्थंव्यासःसम्यगुपासितः ॥ दुदोहिथमतिंतस्यत्वंपुराणाश्रयांशुभां ॥ २० ॥ अमीषांविप्रमुख्यानांपुराणंप्रतिसम्प्रति ॥ शुश्रूषाऽऽस्तेमहाबुद्धेतच्छ्रावयितुमर्हसि ॥ २१ ॥ सर्वेहीमेमहात्मानोनानागोत्राःसमागताः ॥ स्वान्स्वान्वं शान्पुराणोक्ताञ्छृण्वन्तुब्रह्मवादिनः ॥ २२ ॥ संपूर्णेदीर्घसत्रेस्मिंस्तांस्त्वंश्रावयवैमुनीन् ॥ पाद्मंपुराणंसर्वेषांकथयस्वमहामते ॥ २३ ॥ कथंपद्मंसमुद्भूतं ब्रह्मातत्रकथंन्वभूत् ॥ प्रोद्भूतेनकथंसृष्टिःकृतातांतुतथावद ॥ २४ ॥ एवंपृष्टस्ततस्तांस्तुप्रत्युवाचशुभांगिरम् ॥ सूक्ष्मंचन्यायसंयुक्तंप्राब्रवील्लौमहर्ष णिः २५ ॥ प्रीतोस्म्यनुगृहीतोस्मिभवद्भिरिहचोदनात् ॥ पुराणार्थंपुराणज्ञैःसर्वधर्मपरायणैः ॥२६ ॥ यथाश्रुतंसुविख्यातंतत्सर्वंकथयामिवः ॥ धर्मएप उद्भूतस्यसद्भिर्दृष्टः सनातनः ॥ २७ ॥ देवतानामृषीणांचराज्ञांचामिततेजसाम् ॥ वंशानांधारणंकार्यंस्तुतीनांचमहात्मनाम् ॥ २८ ॥ इतिहासपुराणेषु

ष्टायेब्रह्मवादिनः॥ नहिवेदेष्वधीकारः कश्चित्सूतस्यदृश्यते ॥ २९ ॥ वैन्यस्यहिपृथोर्यज्ञेवर्त्तमानेमहात्मनः ॥ मागधश्चैवसूतश्चतमस्तौतांनरेश्वरम् ॥ ३० ॥
तुष्टेनाथतयोर्दत्तोवरोराज्ञामहात्मना ॥ सूतायसूतविषयोमगधोमागधायच ॥ ३१ ॥ तत्रसूत्यांसमुत्पन्नः सूतोनामेहजायते ॥ ऐन्द्रेसत्रेप्रवृत्तेतुग्रहयुक्तेबृ
हस्पतौ ॥ ३२ ॥ तमेवेंद्रंबार्हस्पत्येतत्रसूतोव्यजायत ॥ शिष्यहस्तेनयत्पृक्तमभिभूतंगुरोर्हविः ॥ ३३ ॥ अधरोत्तरधारेणजज्ञेतद्वर्णसंकरम् ॥ येत्रक्षत्रा
त्समभवन्ब्राह्मण्याश्चैवयोनितः ॥ ३४ ॥ पूर्वेणैवतुसाधर्म्याद्वैधर्मास्तेप्रकीर्तिताः ॥ मध्यमोह्येषसूतस्यधर्मः क्षेत्रोपजीविनः ॥ ३५ ॥ पुराणेष्वधिकारो
मेविहितोब्राह्मणैरिह ॥ दृष्ट्वाधर्ममहंपृष्टोभवद्भिर्ब्रह्मवादिभिः ॥ ३६ ॥ तस्मात्सम्यग्भुविब्रूयांपुराणमृषिपूजितम् ॥ पितृणांमानसीकन्यावासवंसमपद्यत
॥ ३७ ॥ अपध्याताचपितृभिर्मत्स्यगर्भेबभूवसा अरणीवहुताशस्यनिमित्तंपुण्यजन्मनः ॥ ३८ ॥ तस्यांबभूवपूतात्मामहर्षिस्तुपराशरात् ॥ तस्मैभ
गवतेकृत्वानमः सत्यायवेधसे ॥ ३९ ॥ पुरुषायपुराणायब्रह्मवाक्यानुवर्तिने ॥ मानवच्छद्मरूपायविष्णवेशंसितात्मने ॥ ४० ॥ जातमात्रंचयंवेदउप
तस्थेससंग्रहः॥ मतिमंथानमाविध्ययेनासौश्रुतिसागरात् ॥ ४१ ॥ प्रकाशोजनितोलोकेमहाभारतचंद्रमाः ॥ भारतंभानुमान्विष्णुर्यदिनस्युरमीत्रयः ॥
॥ ४२ ॥ ततोऽज्ञानतमोंधस्यकावस्थाजगतोभवेत् ॥ कृष्णद्वैपायनंव्यासंविद्धिनारायणंप्रभुम् ॥ ४३ ॥ कोह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवेत् ॥ त
स्मादहमुपाश्रौषंपुराणंब्रह्मवादिनः ॥ ४४ ॥ सर्वज्ञात्सर्वलोकेषुपूजिताद्दीप्ततेजसः ॥ पुराणंसर्वशास्त्राणांप्रथमंब्रह्मणास्मृतम् ॥ ४५ ॥ उत्तमंसर्वलोकानां
सर्वज्ञानोपपादकम् ॥ त्रिवर्गसाधनंपुण्यंशतकोटिप्रविस्तरम् ॥ ४६ ॥ निःशेषेषुचलोकेषुवाजिरूपेणकेशवः ॥ ब्रह्मणस्तुसमादेशाद्वेदानाहृतवानसौ ॥४७॥
अंगानिचतुरोवेदान्पुराणन्यायविस्तरम् ॥ असुरेणाखिलंशास्त्रमपहृत्यात्मसात्कृतम् ॥४८॥ मत्स्यरूपेणाजहारकल्पादावुदकार्णवे ॥ अशेषमेतदवदुदकां
तर्गतोविभुः ॥ ४९ ॥ श्रुत्वाजगादचमुनीन्प्रतिवेदांश्चतुर्मुखः ॥ प्रवृत्तिस्सर्वशास्त्राणांपुराणस्याभवत्तदा ॥५०॥ कालेनाग्रहणंदृष्ट्वापुराणस्यतदाविभुः ॥
व्यासरूपस्तदाब्रह्मासंग्रहार्थंयुगेयुगे ॥ ५१ ॥ चतुर्लक्षप्रमाणेनद्वापरेद्वापरेजगौ ॥ तदाष्टादशधाकृत्वाभूलोकेस्मिन्प्रकाशितं ॥ ५२ ॥ अद्यापिदेवलो
केषुशतकोटिप्रविस्तरम् ॥ तदेवात्रचतुर्लक्षंसंक्षेपेणनिवेशितम् ॥ ५३ ॥ प्रवक्ष्यामिमहापुण्यंपुराणंपाद्मसञ्ज्ञितम् ॥ सहस्रंपञ्चपञ्चाशत्पंचखण्डैस्समन्वितम्
॥ ५४ ॥ तत्रादौसृष्टिखण्डंस्याद्भूमिखण्डंततः परम् ॥ स्वर्गखण्डंततः पश्चात्ततः पातालखण्डकम् ॥ ५५ ॥ पञ्चमंचततः ख्यातमुत्तरंखण्डमुत्तमम् ॥
एतदेवमहापद्ममुद्भूतंयन्मयंजगत् ॥ ५६ ॥ तद्वृत्तान्ताश्रयंयस्मात्पाद्ममित्युच्यतेततः ॥ एतत्पुराणममलंविष्णुमाहात्म्यनिर्मलम् ॥ ५७ ॥
देवदेवोहरिर्यद्वैब्रह्मणेप्रोक्तवान्पुरा ॥ ब्रह्माभिहितंपूर्वंयावन्मात्रंमरीचये ॥ ५८ ॥ एतदेवचवैब्रह्मापाद्मंलोकेजगादवै ॥ सर्वभूताश्रयंतच्चपाद्म

मित्युच्यतेबुधैः ॥ ५९ ॥ पाद्मंतत्पंचपंचाशत्सहस्राणीहपठ्यते ॥ पंचभिःपर्वभिःप्रोक्तंसंक्षेपाद्व्यासकारितात् ॥ ६० ॥ पौष्करंप्रथमंपर्वयत्रो
त्पन्नः स्वयंविराट् ॥ द्वितीयंतीर्थपर्वस्यात्सर्वग्रहगणाश्रयम् ॥ ६१ ॥ तृतीयपर्वग्रहणाराजानोभूरिदक्षिणाः ॥ वंशानुचरितंचैवचतुर्थेपरिकीर्तितम्
॥ ६२ ॥ पंचमेमोक्षतत्वंचसर्वतत्वंनिगद्यते ॥ पौष्करेनवधासृष्टिः सर्वेषांब्रह्मकारिता ॥ ६३ ॥ देवतानांमुनीनांचपितृसर्गस्तथापरः ॥ द्वितीयेपर्व
ताश्चैवद्वीपाः सप्तससागराः ॥ ६४ ॥ तृतीयेरुद्रसर्गस्तुदक्षशापस्तथैवच ॥ चतुर्थेसंभवोराज्ञांसर्ववंशानुकीर्त्तनम् ॥ ६५ ॥ अन्त्येपवर्गसंस्थानंमोक्ष
शास्त्रानुकीर्त्तनम् ॥ सर्वमेतत्पुराणेऽस्मिन्कथयिष्यामिवोद्विजाः ॥६६॥ इदंपवित्रंयशसोनिधानमिदंपितॄणामतिवल्लभंस्यात् ॥ इदंचदेवस्यसुखायनित्यमि
दंमहापातकभिच्चपुंसाम् ॥६७॥ इतिश्रीपद्मपुराणेप्रथमेसृष्टिखंडेपुराणावतारेप्रथमोऽध्यायः ॥ १ ॥ ॥ सूतउवाच ॥ ॥ नमस्येसर्वलोकानांविश्वस्यजगतः
पतिम् ॥ यइमंकुरुतेभावंसृष्टिरूपंप्रधानवित् ॥ १ ॥ लोककृल्लोकतत्वज्ञोयोगमास्थाययोगवित् ॥ असृजत्सर्वभूतानिस्थावराणिचराणिच ॥ २ ॥ तमजंविश्वकर्माणं
चित्पतिंलोकसाक्षिणम् ॥ पुराणाख्यानजिज्ञासुर्व्रजामिशरणंविभुम् ॥ ३ ॥ ब्रह्मविष्णुगिरीशेभ्योनमस्कृत्वासमाहितः ॥ इंद्रायलोकपालेभ्यः सवित्रेचस
माधिना ॥ ४ ॥ मुनीनांचवरिष्ठायवसिष्ठायमहात्मने ॥ तद्वक्रे भाततपसेजातूकर्ण्यायचाक्षुपे ॥ ५ ॥ तस्मैभगवतेनत्वावेदव्यासायवेधसे ॥ पुरुपाय
पुराणायभृगुवाक्यानुवर्तिने ॥ ६ ॥ तस्मादहमुपाश्रौषंपुराणंब्रह्मवादिनः ॥ सर्वज्ञात्सर्वलोकेषुपूजितादीप्ततेजसः ॥ ७ ॥ अव्यक्तंकारणंयत्तन्नित्यंसदसदा
त्मकम् ॥ महदादिविशेषांतंसृजतीतिविनिश्चयः ॥ ८ ॥ अण्डेहिरण्मयेपूर्वंब्रह्मणः सूतिरुत्तमा ॥ अंडस्यावरणंचाद्भिरपामपिचतेजसा ॥९॥ वायुनातस्य
वायोः खात्तद्भूतादितआवृतम् ॥ भूतादिर्महताचापिअव्यक्तेनावृतोमहान् ॥ १० ॥ प्रादुर्भावश्चलोकानामंडएवोपवर्णितः ॥ नदीनांपर्वतानांचप्रादुर्भावो
नुवर्ण्यते ॥ ११ ॥ मन्वंतराणांसंक्षेपात्कल्पानांचोपवर्णनम् ॥ ब्रह्मवृक्षलयब्रह्मप्रजासर्गोपवर्णनम् ॥ १२ ॥ कल्पानांसंचरश्चैवजगतःस्थापनंतथा ॥
शयनंचहरेरप्सुपृथिव्युद्धरणंपुनः ॥ १३ ॥ दशधाजन्मसंचारोभृगुशापेनकेशवे ॥ सन्निवेशोयुगादीनांसर्वाश्रमविभाजनम् ॥ १४ ॥ स्वर्गस्थानविभा
गश्चमर्त्यानांस्वर्गचारिणां ॥ पशूनांपक्षिणांचैवसंभवः परिकीर्त्तितः ॥ १५ ॥ तथानिर्वचनंकल्पंस्वाध्यायस्यपरिग्रहः ॥ प्रतिसर्गाः पुनः प्रो
क्ताब्रह्मणोबुद्धिपूर्वकाः ॥ १६ ॥ त्रयोन्येऽबुद्धिपूर्वास्तेतथालोकानकल्पयत् ॥ ब्रह्मणोवदनेभ्यश्चभृग्वादीनांसमुद्भवः ॥ १७ ॥ कल्पयोरंतरंप्रोक्तं
प्रतिसंधिश्चसर्गयोः ॥ भृग्वादीनामृषीणांचप्रजासर्गोपवर्णनम् ॥ १८ ॥ वसिष्ठस्यचब्रह्मर्षेर्ब्रह्मत्त्वंपरिकीर्तितम् ॥ स्वायंभुवस्यचमनोस्ततश्चाप्यनुकी
र्तनम् ॥ १९ ॥ उक्तोनाभेर्विसर्गश्चरजसश्चमहात्मनः ॥ द्वीपानांचसमुद्राणांपर्वतानांचकीर्तनम् ॥ २० ॥ द्वीपभेदसमुद्राणामन्तर्भावश्चसप्तसु ॥







कीर्त्यन्तेयोजनाग्रेणयेचतत्रनिवासिनः ॥ २१ ॥ तदीयानिचवर्षाणिनदीभिःपर्वतैःसह ॥ जंबूद्वीपादयोद्वीपाःसमुद्रैःसप्तभिर्वृताः ॥ २२ ॥ अंडस्यांतस्त्विमेलोकाः सप्तद्वीपाचमेदिनी ॥ सूर्याचंद्रमसोश्चारोग्रहाणां ज्योतिषांतथा ॥ २३ ॥ कीर्त्यतेध्रुवसामर्थ्यात्प्रजानांचशुभाशुभम् ॥ ब्रह्मणानिर्मितःसौरः स्यंदनोर्थवशात्स्वयम् ॥ २४ ॥ कल्पितो भगवांस्तेनप्रसर्पतिदिवाकरः ॥ सूर्यादीनांस्यंदनानांध्रुवादेवप्रवर्त्तनं ॥ २५ ॥ कल्पितःशिशुमारश्चयस्यपुच्छेध्रुवःस्थितः ॥ संभवांतेचसंहारःसंहारांतेचसंभवः ॥२६॥ देवतानामृषीणांचमनोःपितृगणस्यच ॥ नशक्यंविस्तराद्वक्तुमित्युक्तंचसमासतः ॥ २७ ॥ अतीतानागतानांवैसमंस्वायंभुवेनतु ॥ मन्वंतरेषुदेवानांप्रजेशानांचकीर्तनम् ॥ २८ ॥ नैमित्तिकःप्राकृतिकस्तथैवात्यंतिकः स्मृतः ॥ त्रिविधःसर्वभूतानांकल्पितःप्रतिसंचरः ॥ २९ ॥ अनावृष्टिर्भास्कराच्चघोरः संवर्तकानलः ॥ मेघाश्चैकार्णवायेतुतथारात्रिर्महात्मनः ॥ ३० ॥ संध्यालक्षणमुद्दिष्टंतथाब्राह्मंविशेषतः ॥ भूतानांचापिलोकानांसप्तानामनुवर्णनम् ॥ ३१ ॥ संकीर्त्यतेमयाचात्रपापानांरौरवादयः ॥ सर्वेषामेवसत्वानांपरिणामविनिर्णयः ॥ ३२ ॥ ब्रह्मणःप्रतिसर्गश्चसर्वसंहारवर्णनम् ॥ कल्पेकल्पेचभूतानांमहतामपिसंक्षयः ॥ ३३ ॥ सुसंख्यायचबुद्धावैब्रह्मणश्चाप्यनित्यताम् ॥ दौरात्म्यंचैवभोगानांसंसारस्यचकष्टताम् ॥ ३४ ॥ दुर्लभत्वंचमोक्षस्यवैराग्याद्दोषदर्शनम् ॥ व्यक्ताव्यक्तंपरित्यज्य सत्वंब्रह्मणिसंस्थितम् ॥ ३५ ॥ नानात्वदर्शनात्सुस्थस्ततस्तदभिवर्त्तते ॥ ततस्तापत्रयातीतोविरूपाख्योनिरंजनः ॥ ३५ ॥ आनंदंब्रह्मणःप्राप्तोनाबिभेतिकुतश्चन ॥ इतिकृत्यसमुद्देशःप्रमाणस्योपवर्णितः ३६ ॥ कीर्त्यंतेजगतोयत्रसर्गप्रलयविक्रियाः ॥ प्रवृत्तिश्चापिभूतानांनिवृत्तीनांफलानिच ॥ ३७ ॥ प्रादुर्भावोवसिष्ठस्यशक्तेर्जन्मतथैवच ॥ सौदासान्निग्रहस्तस्यविश्वामित्रकृतेनच ॥ ३८ ॥ पराशरस्यचोत्पत्तिरदृश्यन्त्यांयथाविभोः ॥ जज्ञेपितृणांकन्यायांव्यासश्चापियथामुनिः ॥ ३९ ॥ शुकस्यचयथाजन्मपुत्रस्यसहधीमतः ॥ पराशरस्यविद्वेषोविश्वामित्रकृतोयथा ॥ ४० ॥ वसिष्ठसंभृतश्चाग्निर्विश्वामित्रजिघांसया ॥ संधानहेतोर्विभुनाजीर्णःकण्वेनधीमता ॥ ४१ ॥ देवेनविप्राविप्राणांविश्वामित्रहितैषिणा ॥ एकंवेदंचतुःपादंचतुर्धापुनरीश्वरः ॥४२॥ यथाविभेदभगवान्व्यासःसर्वेष्वनुग्रहात् ॥ तस्यशिष्यप्रशिष्यैश्चशाखाभेदाः पुनः कृताः ॥ ४३ ॥ प्रयागेमुनिवर्यैश्चयथापृष्टः स्वयंप्रभुः ॥ कृष्णेनचानुशिष्टास्तेमुनयोधर्मकांक्षिणः ॥ ४४ ॥ एतत्सर्वंयथातत्वमाख्यातंद्विजसत्तमाः ॥ मुनीनांधर्मनित्यानांलोकतंत्रमनुत्तमम् ॥ ४५ ॥ ब्रह्मणायत्पुराप्रोक्तंपुलस्त्यायमहात्मने ॥ पुलस्त्येनाथभीष्मायगंगाद्वारेप्रभाषितम् ॥ ४६ ॥ धन्यंयशस्यमायुष्यंसर्वपापप्रणाशनम् ॥ कीर्तनंश्रवणंचास्यधारणंचविशेषतः ॥ ४७ ॥ सूतेनानुक्रमेणेदंपुराणंसंप्रकाशितम् ॥ ब्राह्मणेषुपुरायच्चब्रह्मणोक्तंसविस्तरम् ॥ ४८ ॥ पादमस्यविदन्सम्यग्योधीयीतजितेंद्रियः ॥

तेनाधीतंपुराणंस्यात्सर्वंनास्त्यत्रसंशयः ॥ ४९ ॥ योविद्याच्चतुरोवेदान्सांगोपनिषदोद्विजः ॥ पुराणंचविजानातियः सतस्माद्विचक्षणः ॥ ५० ॥
इतिहासपुराणाभ्यांवेदंसमुपबृंहयेत् ॥ बिभेत्यल्पश्रुताद्वेदोमामयंप्रतारिष्याति ॥ ५१ ॥ अधीत्यचैकमध्यायंस्वयंप्रोक्तंस्वयंभुवा ॥ आपदःप्राप्यमुच्येतय
थेष्टांप्राप्नुयाद्गतिम् ॥ ५२ ॥ पुरापरंपरांवक्तिपुराणंतेनवैस्मृतम् ॥ निरुक्तिमस्ययोवेदसर्वपापैः प्रमुच्यते ॥ ५३ ॥ ऋषयोह्यब्रुवन्सूतंकथंभीष्मेणस
ङ्गतः ॥ ब्रह्मणोमानसःपुत्रः पुलस्त्योभगवानृषिः ॥ ५४ ॥ दुर्लभंदर्शनंयस्यनरैः पापसमन्वितैः ॥ अत्याश्चर्यमिदंसूतक्षत्रियेणकथंमुनिः ॥ ५५ ॥
आराधितोबृहद्भूतस्तन्नोवदमहामते ॥ कीदृशंवातपस्तेनकोवान्योनियमः कृतः ॥ ५६ ॥ येनतुष्टोमुनिर्ब्राह्मस्तथातेनप्रभाषितः ॥ पर्ववाप्यथपर्वार्धं
समग्रंवाप्रभाषितम् ॥ ५७ ॥ यस्मिन्स्थानेयथादृष्टःपुलस्त्योभगवानृपिः ॥ तन्नोवदमहाभागकल्याः स्मश्रवणेवयम् ॥ ५८ ॥ ॥ सूतउवाच ॥
यत्रगंगामहाभागासाधूनांहितकारिणी॥विभिद्यपर्वतंवेगान्निःसृतालोकपावनी ॥ ५९ ॥ गंगाद्वारेमहातीर्थेभीष्मः पितृपरायणः ॥ शुश्रूषुःसुचिरंका
लंमहतांनियमेस्थितः ॥ ६० ॥ यावद्वर्षशतंसाग्रंपरमेणसमाधिना ॥ ध्यायमानः परंब्रह्मत्रिकालंस्नानमाचरत् ॥ ६१ ॥ पितॄन्देवांस्तर्पयतःस्वा
ध्यायेनमहात्मनः ॥ आत्मानंकर्पतश्चास्यतुष्टोदेवःपितामहः॥६२॥उवाचतनयंब्रह्मापुलस्त्यमृषिसत्तमम् ॥ सत्वंदेवव्रतंभीष्मंवीरंकुरुकुलोद्भवम् ॥ ६३ ॥
तपसःसंनिवर्त्तस्वकारणंचास्यकीर्त्तय ॥ पितॄन्भक्त्यामहाभागोध्यायमानस्समास्थितः ॥ ६४ ॥ योह्यस्यमनसःकामस्तंसंपादयमाचिरम् ॥ पितामह
वचः श्रुत्वापुलस्त्योमुनिसत्तमः ॥ ६५ ॥ गंगाद्वारमथागत्यभीष्मंवचनमब्रवीत् ॥ वरंवरयभद्रंतेयत्तेमनसिवर्त्तते ॥ ६६ ॥ तुष्टस्तेतपसावीरसा
क्षाद्देवःपितामहः ॥ ब्रह्मणाप्रेपितस्तेहंवरान्दास्यामिकांक्षितान् ॥ ६७ ॥ भीष्मोपितद्वचःश्रुत्वामनःश्रोत्रसुखावहम् ॥ उन्मील्यनयनेदृष्ट्वापुलस्त्यं
पुरतः स्थितम् ॥ ६८ ॥ अष्टांगप्रणिपातेननत्वातंमुनिसत्तमम् ॥ उवाचप्रणतोभूत्वासर्वांगालिंगितावनिः ॥ ६९ ॥ अद्यमेसफलंजन्मदिनंचेदंसुशोभनम् ॥
भवतश्चरणौदृष्टौजगद्वंद्यौमयात्विह ॥ ७० ॥ तपसश्चफलंप्राप्तंयद्दृष्टोभगवान्मया ॥ वरप्रदोविशेषेणसंप्राप्तश्चनदीतटे ॥ ७१ ॥ इयंब्रसीमयाक्लृप्ता
आस्यतां सुखदाकृता ॥ अर्घ्यपात्रेतुपालाशेदूर्वाक्षतसुमैःकुशैः ॥७२॥ सर्पपैश्चदधिक्षौद्रैर्यवैश्चपयसासह ॥ अष्टांगोह्येपनिर्दिष्टोह्यर्घोहिमुनिभिःपुरा॥७३॥
श्रुत्वैतद्वचंनतस्यभीष्मस्यामिततेजसः ॥ उपविष्टोब्रह्मसुतःपुलस्त्योभगवानृषिः ॥ ७४ ॥ विष्टरंसहपाद्येनअर्घपात्रंमुदान्वितः ॥ जुजोपभगवान्प्रीतःसदा
चारेणतेनतु ॥७५॥ पुलस्त्यउवाच ॥ सत्यवान्दानशीलोसिसत्यसंधिर्नरेश्वरः॥ह्रीमान्मैत्रःक्षमाशीलोविक्रांतःशत्रुशासने ॥७६॥धर्मज्ञस्त्वंकृतज्ञस्त्वंदयावा
न्प्रियभापिता॥मान्यमानयिताविज्ञोब्रह्मण्यःसाधुवत्सलः॥७७॥तुष्टस्तेहंसदावत्सप्रणिपातपरस्यवै॥प्रब्रूहित्वंमहाभागकथनंतेवदाम्यहम् ॥ ७८॥ भीष्मउ





वाच ॥ भगवन्भगवान्ब्रह्माकस्मिन्कालेस्थितोविभुः ॥ सृष्टिंचकारवैपूर्वंदेवादीनांवदस्वमे ॥ ७९ ॥ स्थितिंवाभगवान्विष्णुःकथंरुद्रस्तुनिर्मितः ॥ कथंवा
ऋषयोदेवास्सृष्टास्तेनमहात्मना ॥८०॥ कथंपृथ्वीकथंव्योमकथंचेमेतुसागराः ॥ कथंद्वीपाःपर्वताश्चग्रामारण्यपुराणिच ॥८१॥ मुनीन्प्रजापतींश्चैवसप्तर्षी
न्प्रवरानपि ॥ वर्णान्वायुंपुरास्थानगंधर्वान्यक्षराक्षसान् ॥ ८२ ॥ तीर्थानिसरितोवाथसूर्यादीन्ग्रहतारकान् ॥ यथाससर्जभगवांस्तथामेत्वंवदस्वह ॥ ८३ ॥
पुलस्त्यउवाच ॥ परःपराणांपरमःपरमात्मापितामहः ॥ रूपवर्णादिरहितोविशेषणविवर्जितः ॥ ८४ ॥ अपक्षयविनाशाभ्यांपरिणामर्द्धिजन्मभिः ॥ गुणैर्विव
र्जितःसर्वैःसभातीतिहिकेवलम् ॥ ८५ ॥ सर्वत्रासौसमश्चापिवसन्नत्रुपमोमतः ॥ भावयन्ब्रह्मरूपेणविद्वद्भिःपरिपठ्यते ॥ ८६ ॥ तंगुह्यंपरमंनित्यमजमक्षय
मव्ययम् ॥ तथापुरुषरूपेणकालरूपेणसंस्थितम् ॥ ८७ ॥ तंनत्वाहंप्रवक्ष्यामियथासृष्टिंचकारह ॥ पूर्वंतुपद्मशयनादुत्थायजगतःप्रभुः ॥ ८८ ॥ गुणव्यं
जनसंभूतःसर्गकालेनराधिप ॥ सात्विकोराजसश्चैवतामसश्चत्रिधामहान् ॥ ८९ ॥ प्रधानतत्वेनसमंतथाबीजादिभिर्वृतः ॥ वैकारिकस्तैजसश्चभूतादिश्चै
वतामसः ॥ ९० ॥ त्रिविधोयमहंकारोमहत्तत्त्वादजायत ॥ भूतेंद्रियाणांपंचानांतथाकर्मेंद्रियैःसह ॥ ९१ ॥ पृथिव्यापस्तथातेजोवायुराकाशमेवच ॥
एकैकशःस्वरूपेणकथयामियथोत्तरम् ॥ ९२ ॥ शब्दमात्रमथाकाशंभूतादिःखंसमावृणोत् ॥ अथाकाशंविकुर्वाणंस्पर्शमात्रंससर्जह ॥ ९३ ॥ बलवानेपवै
वायुस्तस्यस्पर्शोगुणोमतः ॥ आकाशंशब्दमात्रंतुस्पर्शमात्रंसमावृणोत् ॥ ९४ ॥ ततोवायुर्विकुर्वाणोरूपमात्रंससर्जह ॥ ज्योतीरूपन्तुतद्वायुस्तद्रूपगुणमु
च्यते ॥ ९५ ॥ स्पर्शरूपस्तुवैवायूरूपमात्रंसमावृणोत् ॥ ज्योतिश्चापिविकुर्वाणंरसमात्रंससर्जह ॥ ९६ ॥ संभवंतिततोंभांसिरूपमात्रंसमावृणोत् ॥ विकु
र्वाणानिचांभांसिगंधमात्रंससर्जिरे ॥ ९७ ॥ संघातोजायतेतस्मात्तस्यगंधोमतोगुणः ॥ तैजसानींद्रियाण्याहुर्देवावैकारिकादश ॥ ९८ ॥ एकादशम्मन
श्चात्रदेवावैकारिकाःस्मृताः ॥ त्वक्चक्षुर्नासिकाजिह्वाश्रोत्रमत्रचपंचमम् ॥ ९९ ॥ एतेषांतुमतंकृत्यंशब्दादिग्रहणंपुनः ॥ वाक्पाणिपादपायूनिचोपस्थं
तत्रपञ्चमम् ॥१००॥ विसर्गशिल्पगत्युक्तिर्गुणाएषांविपर्ययात्॥आकाशवायुतेजांसिसलिलंपृथिवीतथा ॥१०१॥ शब्दादिभिर्गुणैर्वीरयुक्तानीत्युत्तरोत्तरैः॥
शांताघोराश्चमूढाश्चविशेषास्तेनतेस्मृताः ॥ १०२ ॥ नानावीर्याःपृथग्भूतास्ततस्तेसंहतिंविना ॥ नाशक्नुवन्प्रजाःस्रष्टुमसमागम्यकृत्स्नशः ॥ १०३ ॥
समेत्यान्योन्यसंयोगात्परस्परसमाश्रयात् ॥ एकसंघातलक्षाश्चसंप्राप्यैक्यमशेषतः ॥ १०४ ॥ पुरुषाधिष्ठितत्वाच्चव्यक्तानुग्रहणेतथा ॥ महदादयोविशेषां
ताह्यंडमुत्पादयंतिवै ॥१०५॥ तत्क्रमेणविवृत्तंतुजलबुद्बुदवत्समम् ॥ तत्राव्यक्तस्वरूपोसौव्यक्तरूपीजनार्दनः ॥ १०६ ॥ ब्रह्माब्रह्मस्वरूपेणस्वयमेवव्यव
स्थितः ॥ मेरुरुल्वमभूत्तस्यजरायुश्चमहीधराः ॥ १०७ ॥ गर्भोदकंसमुद्राश्चतस्यासंश्चमहात्मनः ॥ तत्रद्वीपास्समुद्राश्चसज्योतिर्लोकसंग्रहः ॥ १०८ ॥

पपातपरुषःप्रांशुःपुष्पवाणोविमोहनः॥३७॥ततःकरणसंदोहेविद्धेतुहृदयेभवः॥बभूवभूतपोकंप्यधैर्योपिमदनोन्मुखः ॥३८॥ततःप्रभुत्वाद्भावानामावेशंस्व
मपश्यत ॥ वाक्यंबहुवभाषेथप्रत्यूहप्रसवात्मकं ॥३९॥ ततःकोपानलोद्भूतघोरहुंकारभीषणे ॥ बभूववदनेनेत्रंतृतीयमनलाकुलं ॥ २४० ॥ रुद्रस्यरौद्रव
पुषोजगत्संहारभैरवम्॥ तदंतिकस्थेमदनेव्यस्फारयतधूर्जटिः ॥ ४१ ॥ तन्नेत्रविस्फुलिंगेनक्रोशतांनाकवासिनाम् ॥ गमितोभस्मतांतूर्णंकंदर्पःकामदर्प
कः ॥ ४२ ॥ सतुतंभस्मसात्कृत्वाहरनेत्रोद्भवोनलः ॥ व्यजृंभतजगद्दग्धुंज्ञात्वाहुंकारघस्मरं ॥ ४३ ॥ ततोभवोजगद्धेतोर्व्यभजत्जातवेदसम् ॥ सह
कारेमधौचन्द्रेसुमनःस्स्वपरेष्वपि॥४४॥भृंगेषुकोकिलास्येचविभागेनस्मरानलं ॥ सबाह्याभ्यंतरेविद्धोहरोथस्मरमार्गणैः॥४५॥ भागेष्वेतेपुसंविष्टंवीक्षती
वहुनाशनं ॥ विभक्तंलोकसंक्षोभकरंदुर्वारजृंभितं ॥ ४६ ॥ तत्प्रातिस्नेहसंपूर्णकामेनहृदयेकिल ॥ ज्वलन्नहर्निशंभीमोदुःखस्यवशगोभवत् ॥ ४७ ॥ वि
लोक्यहरहुंकारज्वालाभस्मीकृतंस्मरं ॥ विललापरतिःक्रूरंबंधुनामधुनासह ॥ ४८ ॥ ततोविलप्यवहुशोमधुनापरिसांत्विता ॥ जगामशरणंदेवमिंदु
मौलिंत्रिलोचनं ॥ ४९ ॥ भृंगानुयातांसंगृह्यपुष्पितांसहकारजां ॥ लतांपत्रद्रुमच्छन्नांजातांपरभृतांसखीं ॥ २५० ॥ निवध्यतुजटाजूटंकुटिलैरलकैरतिः ॥
उद्धृत्यगात्रंशुभ्रेणहृद्येनस्मरभस्मना ॥५१॥ जानुभ्यामवनिंगत्वाप्रोवाचेन्दुविभूषणम् ॥ ॥ रतिरुवाच ॥ ॥ नमःशिवायास्तुमनोमयायजगन्मयायाद्भुत
वर्त्मनेनमः॥५२॥नमःशिवायास्तुसुरार्चितायतुभ्यंसदाभक्तकृपापराय॥नमोभवायास्तुभवोद्भवायनमोस्तुतेध्वस्तमनोभवाय ॥५३॥नमोस्तुमायामदना
श्रयायनमोनिसर्गामलभूषिताय॥नमोस्त्वमेयायगुणायनायनमोस्तुसिद्धायपुरातनाय ॥५४॥ नमःशरण्यायनमोगुणायनमोस्तुतेभीमिगणानुगाय ॥ नमो
स्तुनानाभुवनार्द्धकर्त्रेनमोस्तुभक्ताभिमतप्रदाय ॥५५॥ नमोथकर्मप्रसवेनमःसदाअनंतरूपायसदैवतुभ्यम्॥असह्यकोपायसदैवतुभ्यंशशांकचिह्नायनमो
स्तुतुभ्यम् ॥५६॥ असीमलीलापरमस्तुतायवृषेंद्रयानायपुरांतकाय॥नमःप्रसिद्धायमहौषधायनमोस्तुनानाविधरूपकाय ॥ ५७ ॥ नमोस्तुकालायनमः
कलायनमोस्तुतेकालकलातिगाय ॥ चराचराचार्यविचार्यवर्यमाचार्यमुत्प्रेक्षितभूतसर्गं॥५८॥त्वामिंदुमौलिंशरणंप्रपन्नाप्रियार्त्तयेहंसहसामहेशं ॥ प्रयच्छमे
कामयशःसमृद्धिंपतिंविनातंभगवन्नजीवे ॥५९॥ प्रियःप्रियायाःपुरुषेशनित्यस्ततोपरःकोभुवनेष्विहास्ति ॥ प्रभुःप्रभावीप्रभवःप्रियाणांप्रवीणपर्यायपरा
परंतपः॥२६०॥त्वमेवनाथोभुवनस्यगोप्तादयालुरुन्मूलितभक्तभीतिः॥इत्थंस्तुतःशंकरइंद्रमौलिर्वृषाकपिर्मन्मथकांतयातु ॥ ६१ ॥ तुतोपदोपाकरखं
डधारीउवाचचैनांमधुरंनिरीक्ष्य ॥ शंकरउवाच ॥ भविष्यतिचकामोयंकालेकांतेचिरादथ ॥ ६२ ॥ अनंगइतिलोकेषुसविख्यातिंगमिष्यति ॥ इत्यु
क्ताशिरसावंद्यगिरीशंकामवल्लभा॥६३॥जगामोपवनंचान्यद्रतिस्तुहिनपर्वते॥रुरोदचापिवहुशोदीनारम्येस्थलेस्थले॥६४॥ मरणव्यवसायापिनिवृत्ताचाशि

वाङ्मया ॥ अथनारदवाक्येनचोदितोहिमभूधरः ॥ ६५ ॥ कृताभरणसंस्कारांकृतकौतुकमंगलां ॥ स्वर्गपुष्पकृतापीडांशुभ्रचीनांशुकांबराम् ॥ ६६ ॥
सखीभ्यांसंयुतांशैलोगृहीत्वास्वसुतांततः ॥ जगामसुभगेयोगेतदासंपूर्णमानसः ॥ ६७ ॥ सकाननान्युपाक्रम्यवनान्युपवनानिच ॥ ददर्शरुदतींनारीम
प्रतर्क्यांमहौजसम् ॥६८॥ नरूपेणेदृशीलोकेरम्येषुवनसानुषु ॥ कौतुकेनपरामृष्टस्तांदृष्ट्वारुदतींगिरिः ॥६९॥ उपसृप्यततस्तस्यानिकटंसोप्यपृच्छत ॥
॥ हिमवानुवाच ॥ कासिकस्यासिकल्याणिकिमर्थंचापिरोदिषि॥२७०॥नैतदल्पमहंमन्येकारणंलोकसुंदरि॥ सातस्यवचनंश्रुत्वाउवाचमधुनासह॥७१॥
रुदंतीशोकवचनंश्वसंतीदैन्यवर्धनं ॥ ॥ रतिरुवाच ॥ कामस्यदयितांभार्यांरतिंमांविद्धिसुव्रत ॥ ७२ ॥ गिरावस्मिंश्चभगवान्गिरिशस्तपसिस्थितः ॥
तेनप्रत्यूहरुष्टेनक्रोधाद्विस्फार्यलोचनं ॥७३॥ विमुच्याग्निशिखाज्वालांकामोभस्मावशेषितः ॥ अहंतुशरणंयातातंदेवंभयविह्वला॥७४॥स्तुतवत्यथसंतुष्ट
स्ततोमांगिरिशोब्रवीत् ॥ तुष्टोहंकामदयितेकामोत्पत्तिर्भविष्यति ॥ ७५ ॥ त्वत्स्तुतिंचाप्यधीयानोनरोभक्त्यामदाश्रयः ॥ लप्स्यतेकांक्षितंकामं
निवर्तमरणादपि ॥७६॥ प्रतीक्षमाणातद्वाक्यमाशावेशवशादहं ॥ शरीरंपरिरक्षिष्येकिंचित्कालंमहाद्युते ॥७७॥ इत्युक्तस्तुतयारत्याशैलःसंभ्रमभीषणः ॥
पाणावादायतनयांगंतुमैच्छत्स्वकंपुरं ॥७८॥ भाविनोवश्यभावित्वाद्भवित्रीभूतभाविनी ॥ लज्जमानासखिमुखैरुवाचपितरंगिरिं ॥७९॥ शैलपुत्र्युवाच ॥
दुर्भगेनशरीरेणकिंममानेनकारणं ॥ कथंचतांदशांप्राप्तश्शङ्करोमेपतिर्भवेत् ॥ २८० ॥ तपोभिःप्राप्यतेभीष्टंनासाध्यंतुतपस्यतः ॥ दुर्भगत्वंवृथा
लोकेविहितेसतिसाधने ॥ ८१ ॥ तपसिभ्रष्टसंदेहाततःस्वार्थजिगीषया ॥ एवंतपःकरिष्येहंयामीत्युक्तवतींसुताम् ॥ ८२ ॥ उवाचवाचाशै
लेंद्रोगद्गदस्वरवर्णया ॥ हिमवानुवाच ॥ उमेतिचापलंपुत्रिनक्षमंतावकंवपुः ॥ ८३ ॥ सोढुंक्लेशानुरूपस्यतपसःसौम्यदर्शने ॥ भावीन्यपिचकार्या
णिपदार्थानिसदैवतु ॥ ८४ ॥ भाविनोर्थाभवंत्येवबहवोऽनिच्छतोपिहि ॥ तस्मान्नतपसातेस्तिबालेकिंचित्प्रयोजनम् ॥ ८५ ॥ भवनंचैवगच्छामिचिंत
यिष्यामितत्रवै ॥ इत्युक्तातुयदानैवगृहमन्वेतिशैलजा ॥ ८६ ॥ ततोद्रिश्चिंतयाविष्टःस्वसुतांप्रशशंसच ॥ ततोंतरिक्षेदिव्याचवागभूद्भुवनत्रये ॥ ८७ ॥
उमेतिचापलंपुत्रित्वयोक्तातनयायतः ॥ उमेतिनामतेनास्याभुवनेषुभविष्याति ॥ ८८ ॥ सिद्धिमूर्तिमतीत्वेषासाधयिष्यतिचिंतितम् ॥ इतिश्रु
त्वातुवचनंसतदाकाशमंडले ॥८९॥ अनुज्ञायसुतांशैलोजगामाशुस्वमंदिरम् ॥ पुलस्त्यउवाच ॥ शैलजापिययौशैलमगम्यमपिदैवतैः ॥ २९० ॥ सखी
भ्यामनुयातातुनियतानगराजजा ॥ शृंगंहिमवतःपुण्यंनानाधातुविभूषितम् ॥ ९१ ॥ दिव्यपुष्पलताकीर्णंभ्रमरोद्घुष्टपादपम् ॥ दिव्यप्रस्रवणोपेतंमनो
रथशतोज्ज्वलम् ॥ ९२ ॥ नानापक्षिसमायुक्तंचक्रवाकोपशोभितम् ॥ जलजस्थलजैःपुण्यैःप्रफुल्लैरुपशोभितम् ॥ ९३ ॥ चित्रकंदरसंगुह्यंदिव्यगेहसम

न्वितम् ॥ विहंगसंघसंघुष्टंकल्पपादपसंकटम् ॥ ९४ ॥ तत्रापश्यन्महाशाखंशाखिनंहरितच्छदम् ॥ सर्वर्तुकुसुमोपेतंचक्रवाकोपशोभितम् ॥ ९५ ॥
नानापुष्पशताकीर्णंनानाविधफलान्वितम् ॥ त्यक्तंसूर्यस्यरुचिभिर्भिन्नसंहतपल्लवम् ॥ ९६ ॥ तत्रांबराणिसंत्यज्यभूषणानिचशैलजा ॥ संवीता
वल्कलैर्दिव्यैर्दर्भनिर्मितमेखला ॥ ९७ ॥ त्रिःस्नातापाटलाहाराबभूवशरदांशतम् ॥ शतमेकेनजीर्णेनपर्णेनावर्त्तयत्तदा ॥ ९८ ॥ निराहाराशतं
साभूत्समानांतपसोनिधिः ॥ ततउद्वेजिताःसर्वेप्राणिनस्तपसोग्निना ॥ ९९ ॥ ततःसस्मारभगवान्मुनीन्सप्तशतक्रतुः ॥ तेसमागम्यमु
दिताःसर्वेसमुदितास्तथा ॥ ३०० ॥ पूजितास्तेमहेंद्रेणपप्रच्छुस्तत्प्रयोजनम् ॥ किमर्थंहिसुरश्रेष्ठसंस्मृतास्तुवयंत्वया ॥ १ ॥ शक्रःप्रोवाचशृण्वं
तुभगवंतःप्रयोजनम् ॥ हिमाचलेतपोघोरंतप्यतेभूधरात्मजा ॥ २ ॥ तस्याभिमतयोगेनभवंतःकर्तुमर्हथ ॥ तपःसमापनंदेव्याजगदर्थेत्वग
न्विताः ॥ ३ ॥ तथेत्युक्त्वाततःशैलंसिद्धसंघातसेवितम् ॥ ऊचुरागम्यमुनयस्तामथोमधुराक्षरम् ॥ ४ ॥ पुत्रिकस्तेव्यवसितःकामः
कमललोचने ॥ तानुवाचततोदेवीसादरंगौरवान्मुनीन् ॥ ५ ॥ देव्युवाच ॥ तपस्यंतोमहाभागाःप्रोह्यमौनंभवादृशां ॥ वंदनायनियुक्ताधीर्याचय
त्यविकल्पितम् ॥ ६ ॥ सुप्रसन्नमुखायूयंगृहीत्वासनमादितः ॥ उपविष्टाःश्रमंमुक्त्वाततःप्रक्ष्यथमामनु ॥ ७ ॥ इत्युक्तास्तेततश्चक्रुस्तत्रासनपरिग्र
हम् ॥ साचतान्विधिवत्पूर्वंपूजयित्वाविधानतः ॥ ८ ॥ उवाचादित्यसंकाशान्मुनीन्सप्तऋषीन्शनैः ॥ त्यक्त्वाव्रतात्मकंमौनंनत्वाचविधिवन्मु
नीन् ॥ ९ ॥ भगवंतोपिमौनांतेतस्याःसप्तर्षयोप्यथ ॥ गौरवाधारतांप्राप्तांपप्रच्छुस्तांपुनस्तथा ॥ १० ॥ सापिगौरवगर्भेणमनसाचारुहासिनी ॥ मु
नीन्सर्वांस्तथालोक्यप्रोवाचप्रोह्यवाग्यमम् ॥ ११ ॥ भगवंतोविजानीथप्राणिनांमनसेप्सितम् ॥ शरीरादिभिरत्यर्थंकदर्थ्यंतेहिदेहिनः ॥ १२ ॥ केचित्तुनिपुणा
स्तत्रघटंतेविविधोद्यमैः ॥ उपायैर्दुर्लभान्भावान्प्राप्नुवंतिह्यतंद्रिताः ॥ १३ ॥ अपरेतुपरिच्छिद्यनानाकारानुपक्रमान् ॥ देहांतरार्थंसारंभमाश्रयं
तिहितद्व्रतम् ॥ १४ ॥ ममत्वाकाशसंभूतकुसुमस्रग्विभूषितम् ॥ विंध्यशृंगंस्प्रष्टुकामोहस्तःप्रसरतेमुहुः ॥ १५ ॥ अहंकिलभवंदेवंपतिंप्राप्तुंसमुद्यता ॥
प्रकृत्यैवदुराराध्यंतपस्यंतंचसंप्रति ॥ १६ ॥ सुरासुरैरनिर्णीतंपरमार्थंक्रियाश्रयं ॥ सांप्रतंचापिनिर्दग्धोमदनोवीतरागिणा ॥ १७ ॥ कथमाराधयेदीशंमादृशीतादृ
शंशिवम् ॥ इत्युक्तामुनयस्तेतुस्थिरतामनसस्ततः ॥ १८ ॥ ज्ञातुमस्यावचःप्रोचुःप्रक्रमात्प्रकृतार्थकम् ॥ मुनयऊचुः ॥ द्विविधन्तुसुखंतावत्पुत्रिलो
केविभाव्यते ॥ १९ ॥ शरीरस्यास्यसंयोगश्चेतसश्चापिनिर्वृतिः ॥ प्रकृत्यातुसदिग्वासाभीमोभस्मास्थिभूषणः ॥ ३२० ॥ कपालीभिक्षुकोनग्नोविरूपाक्षोऽ
स्थिरक्रियः ॥ प्रमत्तोन्मत्तकाकारोबीभत्सोकृतसंग्रहः ॥ २१ ॥ पत्यानतेनचास्त्यर्थोमूर्तोनर्थेनकांक्षितः ॥ यदिस्वस्यशरीरस्यसुखमिच्छ

सिशाश्वतम् ॥३२२॥ तत्कथंतेमहादेवाद्भूतभाजोजुगुप्सितात् ॥ स्रवन्नरवसासास्थिकपालकृतभूषणात् ॥२३॥ श्वसदुग्रभुजंगेन्द्रकृतभूषणभूषितात्॥ श्मशानवासिनोरौद्रप्रमथानुगतादपि॥ २४॥ सुरेन्द्रमकुटव्रातनिघृष्टचरणोऽरिहा॥हरिरास्तिजगद्धाताश्रीकान्तोऽनन्तमूर्तिमान्॥ २५॥ जप्योयज्ञभुजाम स्तितथेन्द्रःपाकशासनः ॥ देवतानांनिधिश्चास्तिज्वलनस्सर्वकामधुक् ॥ २६ ॥ वायुरास्तिजगद्धातायःप्राणस्सर्वदेहिनाम् ॥ तथावैश्रवणोराजा सर्वार्थमहिमाप्रभुः ॥ २७ ॥ एभ्यएकतमंकस्मान्नत्वंसंप्राप्तुमिच्छसि ॥ उतान्यस्मादिहप्राप्यंसुखंतेमनसेहितम् ॥ २८ ॥ एवमेतत्तथापुत्रिप्र भावोलोकसम्पदाम् ॥ अस्मिन्देहेपरेवापिकल्याणप्राप्तयेतव ॥ २९ ॥ पितुरेवास्तितेसर्वंसुरेभ्योयन्निवेदितम् ॥ वरस्यप्राप्तयेक्लेशस्सचाप्यत्रा फलस्तरुः॥ ३३०॥ प्रायेणप्रार्थितोह्यर्थस्समर्थोह्यातिदुर्लभः ॥ स्वस्थानविनियोगित्वात्पुत्रितत्रापिलभ्यते ॥ ३१ ॥ इत्युक्तवत्सुकुपितामुनिवर्येषु शैलजा ॥ उवाचक्रोधरक्ताक्षीविस्फुरद्दशनच्छदा ॥ ३२ ॥ देव्युवाच ॥ असद्ग्रहस्यकानीतिर्व्यसनस्यकयंत्रणा ॥ विपरीतार्थबोद्धारःसत्पथे केनयोजिताः ॥ ३३ ॥ एवंमांवितथदुष्प्रज्ञामस्थानासद्ग्रहप्रियाम् ॥ नमांप्रतिविचारोस्तियदहंकारमानिनी ॥ ३४ ॥ प्रजापतिसमाःसर्वेभवंतःसर्वद र्शिनः ॥ ननूनंवित्थतंदेवंशाश्वतंजगतःप्रभुम् ॥ ३५ ॥ अजमीशानमव्यक्तममेयमहिमोदयम् ॥ आस्तांतत्कर्मसद्भावंसंबोधंतावदावृतम् ॥ ३६ ॥ विदुस्तंनहरिब्रह्ममुखाअपिसुरेश्वराः॥ यत्तस्यविभवंस्वोत्थंभुवनेषुविजृंभितम्॥ ३७॥ प्रकटंसर्वभूतानांतदप्यथनवित्थकिं ॥कस्यैतद्गगनंमूर्तिःकस्याग्निः कस्यमारुतः ॥३८॥ कस्यभूःकस्यवरुणःकश्चंद्रार्कविलोचनः ॥ कस्यार्चयंतिलोकेषुलिंगंभक्त्यासुरासुराः ॥ ३९ ॥ यच्चब्रह्मेश्वरादेवाविष्णिवन्द्राद्याम हर्षयः॥ प्रभावंप्रभवंवापितेषामपिनवित्थकिं ॥ ३४०॥ अदितेःकश्यपाज्जातादेवानारायणादयः ॥ मरीचेःकश्यपःपुत्रोह्यदितिर्दक्षपुत्रिका ॥ ४१ ॥ मरीचिश्चापिदक्षश्चपुत्रौतौब्रह्मणःकिल॥ ब्रह्माहिरण्मयादंडादेवासिद्धविभूतिकः॥ ४२॥ कस्यप्रादुरभूद्ध्यानात्प्राकृतःप्राकृतांशकः ॥ अथनारायणेनैव स्वकीयेच्छासमाश्रयात्॥ ४३॥ तत्प्रेरितःप्रयात्वेषजन्मनारायणात्मकम्॥ सापिकर्मणएवोक्ताप्रेरणविवशात्मनाम् ॥ ४४॥ यथोन्मादादिदुष्टस्यमतिरे वहिसाभवेत्॥ इष्टानेवपदार्थान्वैविपरीतान्हिमन्यते ॥ ४५॥ लोकस्यव्यवहारेषुदृष्टेषुहसतेसदा ॥ धर्माधर्मफलप्राप्तौविष्णुमेवनिबोधत ॥ ४६ ॥ विदध्वमित्थंमुनयोऽसकृच्चमेगिरंगिरीशश्रुतिभूमिसन्निधौ॥ उत्कृष्टकेदारइवावनीतलेसुबीजमुष्टिंसुफलायकर्षकाः॥ ४७॥ तेतांश्रुत्वाहितांरम्यांप्रक्रमा त्प्रक्रमक्रियाम्॥ वाचंवाचांपतिप्रख्याःप्रोचुश्चस्मितसुंदराः॥४८॥ मुनयऊचुः॥ जातेलोकविधानेतुसत्यंतत्कार्यमुत्तमम्॥ प्रायःप्रालेयशैलस्यशंकात त्कालरूपिणः॥ ४९॥ सत्यमुत्कंठिताःसर्वेयेयेकार्यार्थमुद्यताः॥ तेषांत्वरंतेचेतांसिकिंतुनाममहात्मनाम् ॥३५०॥ लोकयात्रानुगंतव्याविशेषेणविवक्षि

तैः ॥ यतस्तद्धर्ममेधंतेतत्प्रामाण्यंपरेधृताः ॥ ५१ ॥इत्युक्तामुनयोजग्मुस्त्वरितास्तुहिनाचलम् ॥ तत्रतेपूजितास्तेनाहिमशैलेनसादरम् ॥ ५२॥ ऊचुर्मु
निवराःप्रीताःस्वल्पकंतुत्वरान्विताः ॥ मुनयऊचुः ॥ देवोदुहितरंसाक्षात्पिनाकीतवमार्गते ॥ ५३ ॥ तच्छीघ्रंपावयात्मानमाहुत्येवानलेहुतम् ॥ कार्यं
हितच्चदेवानांसुचिरंपरिवर्तते ॥ ५४ ॥ जगदुद्धारणायैषविधातव्यःसमुद्यमः ॥ इत्युक्तस्तुतदाशैलोहर्षावेशवशान्मुनीन् ॥ ५५ ॥ असमर्थोभवद्वक्तुमुत्तरं
प्रार्थयन्निव ॥ ततोमेनामुनीन्वंद्यप्रोवाचस्नेहविक्लवा ॥ ५६ ॥ दुहितुस्तान्मुनींश्चैववचनंस्वयमर्थवत् ॥ ॥ मेनोवाच ॥ यदर्थंदुहितुर्जन्मचेच्छंत्यपि
महाफलं ॥ ५७ ॥ तदेवोपस्थितंसर्वंप्रक्रमेणैवसांप्रतम् ॥ कुलजन्मवयोरूपविभुत्वैस्सहितोपियः ॥ ५८ ॥ वरस्तस्यापिनाहूयसुतादेयाह्ययाचतः ॥
दिग्वासाजटिलःशूलीदग्धकामोपिकामदः ॥ ५९ ॥ सतुमत्सुतयाघोरःकथंनामउपास्यते ॥ मुनयउचुः ॥ ऐश्वर्यमवगच्छस्वशंकरस्यसुरासुराः ॥३६०॥
आराध्यमानपादाब्जयुगलाश्चसुनिर्वृताः ॥ यस्योपयोगियद्रूपंतेनतत्प्रार्थ्यतेचिरम् ॥ ६१ ॥ घोरंतपस्यतेबालातेनरूपेणनिर्वृता ॥ यत्सात्रतानिःदिव्या
निनयिष्यतिसमापनम् ॥ ६२ ॥ तदत्रावहितातावदस्मास्वेवभविष्यति ॥इत्युक्त्वागिरिणासार्द्धंययुर्यत्रास्तिशैलजा ॥ ६३ ॥ जितार्कज्वलनज्वालातप
स्तेजोमयींह्युमा ॥ प्रोक्तासामुनिभिःस्निग्धंमानिन्याहवचोर्थवत् ॥ ६४ ॥ नाहंक्षुद्रात्किलेच्छामिऋतेशर्वात्पिनाकिनः ॥ स्थितंचतारतम्येनप्राणिनां
परमर्द्धिदं ॥ ६५ ॥ धीरतैश्वर्यकार्याणिप्रमाणमतुलंमहत् ॥ यस्मान्नकिंचिदपरंयच्चयस्मात्प्रवर्तते ॥ ६६ ॥ यस्यैश्वर्यमनाद्यंतंतमहंशरणंगता ॥ समः
सव्यवसायश्चदीर्घेणविपरीतकः ॥ ६७ ॥ एवंनिशम्यतेवाचंदेव्यामुनिवरास्तदा ॥ आनंदाश्रुपरीताक्षाःसस्वजुस्तांतपस्विनीं ॥ ६८ ॥ ऊचुश्चपरम
प्रीताःशैलजांमधुरंवचः ॥ ॥ ऋषयऊचुः ॥ अत्यद्भुतमहोपुत्रिज्ञानमूर्तिरिवामला ॥ ६९ ॥ प्रसादयसिनोभावंभवभावप्रतिश्रयात् ॥ ननुविद्मो
वयंतस्यदेवस्यैश्वर्यमद्भुतम् ॥ ३७० ॥ त्वन्निश्चयस्यदृढतांवेत्तुंवयमिहागताः ॥ अचिरादेवतन्वंगिकामस्त्वेषभविष्यति ॥ ७१ ॥ आदित्यस्सप्र
भोयातिरत्नेभ्यःकाद्युतिःपृथक् ॥ कोर्थोवर्णान्स्वकांस्त्यक्त्वातथात्वंगिरिशंविना ॥ ७२ ॥ यामोनेकाभ्युपायेनतमभ्यर्थयितुंवयम् ॥ अस्माकमपि
चैषोर्थःसुतरांहृदिवर्तते ॥ ७३ ॥ अतस्त्वमेवसाबुद्धिर्यतोनीतिस्त्वमेवहि ॥ अतोनिःसंशयंकार्यंशंकरोपिविधास्यति ॥ ७४ ॥ इत्युक्त्वापू
जितास्सर्वेमुनयोगिरिकन्यया ॥ प्रययुर्गिरिशंद्रष्टुंप्रस्थंहिमवतोमहत् ॥ ७५ ॥ गंगांभःप्लावितात्मानःपिंगाबद्धजटासटाः ॥ भृंगानुयातपाणिस्थमं
दारकुसुमस्रजः ॥ ७६ ॥ संप्राप्यतुगिरेःप्रस्थंददृशुःशंकराश्रमम् ॥ प्रशांताशेषसत्त्वौघंपर्यस्तिमितकाननम् ॥ ७७ ॥ निःशब्दक्षोभसलिलप्रया
तंसर्वतोदिशम् ॥ तत्रापश्यंस्ततोद्वारिवीरकंवेत्रपाणिनम् ॥ ७८ ॥ तमेतेमुनयःपूज्याविनीताःकार्यगौरवात् ॥ ऊचुर्मधुरभाषाभिस्ते

वाचंवाग्मिनांवराः ॥ ७९ ॥ द्रष्टुंवयमिहायाताःशंकरंगुणनायकं ॥ त्रिलोचनंविजानीहिसुरकार्यप्रचोदिताः ॥ ३८० ॥ त्वमेवनोगतिस्त
त्रयथाकालानतिक्रमः ॥ स्यात्प्रार्थनैषाप्रायेणप्रतिहारमयीप्रभो ॥ ८१ ॥ इत्युक्तोमुनिभिःसोथगौरवात्तानुवाचह ॥ सवनस्यापरांसंध्यांकर्तुमंदा
किनींगतः॥८२॥ क्षणेनभाविताविप्रास्ततोद्रक्ष्यथशूलिनम् ॥ इत्युक्तामुनयस्तस्थुर्यत्नात्कार्यविचक्षणाः ॥८३॥ गंभीरांबुधरंप्रावृट्तृषिताश्चातकायथा ॥
तथाक्षणेननिष्पन्नसमाचारक्रियाविधिम्ः ॥ ८४ ॥ वीरासनकृतोद्देशंमृगचर्मनियामितंम् ॥ ततोविनीतोजानुभ्यामवलंव्यमहींमुदा ॥ ८५ ॥ उवाच
वीरकोदेवंप्रणयैकसमाश्रयम् ॥ संप्राप्तामुनयःसप्तद्रष्टुंत्वांदीप्ततेजसं ॥ ८६ ॥ विभोसमादिशद्रष्टुंततोध्यानमिहार्हसि ॥ इत्युक्तोधूर्जटिस्तेनवीरके
णमहात्मना ॥ ८७ ॥ भ्रूभंगसंज्ञयातेषांप्रवेशाज्ञांददौतदा ॥ मूर्द्धकंपेनतान्सप्तवीरकोपिमहामुनीन् ॥ ८८ ॥ आजुहावविदूरस्थान्दर्शनायपिना
किनः ॥ त्वरावद्धजटास्तेचलंवकृष्णाजिनांबराः ॥ ८९ ॥ विविशुर्वेदिकांदिव्यांगिरीशस्यविभोस्ततः ॥ वद्धपाणिपुटाक्षिप्तनाकपुष्पोत्करास्त
तः ॥ ३९० ॥ पिनाकिपादयुगलंवंद्यनाकनिवासिनः ॥ ततःस्निग्धेक्षिताःसंतोमुनयःशूलपाणिना ॥ ९१ ॥ गिरीशंतेततोदृष्ट्वातेसमंतुष्टवुर्मुदा ॥ मुनयऊ
चुः ॥ ९२ ॥ अहोकृतार्थावयमेवसांप्रतंसुरेश्वरैर्वंदितपादपल्लवम् ॥ विलोकयामोगुणगौरवार्द्धिभिःसमादिशेःकार्यमशेषरक्षणम् ॥ ९३ ॥ ततःप्रहस्यसर्वज्ञ
उवाचमुनिसत्तमान् ॥ भवतांयद्धृदिगतंकार्यंतत्कुरुताधुना ॥ ९४ ॥ इत्युक्तामुनयस्तूर्णंययुर्यत्रचशैलजा ॥ वभाषिरेविभागज्ञागिरिजां
गिरिगह्वरे ॥ रम्यंप्रियमनोहारिमारूपंतपसादह ॥ ९५ ॥ प्रीतस्तेशंकरःपाणिमेषप्रतिग्रहीष्यति ॥ वयमार्थितवंतस्तेपितरंपूर्वमागताः ॥ ९६ ॥ पित्रा
सहगृहंगच्छवयंयामःस्वमंदिरं ॥ इत्युक्तातपसःसत्यंफलमस्तीतिचिंत्यसा ॥ ९७ ॥ त्वरमाणाययौवेश्मपितुर्दिव्यंसुशोभितं ॥ सातत्ररजनींमेनेवर्षायुत
समांसती ॥ ९८ ॥ हरदर्शनसंजातसमुत्कंठाहिमाद्रिजा ॥ ततोमुहूर्त्तेब्राह्मेतुतस्याश्चक्रुःसुहृत्क्रियां ॥ ९९ ॥ नानामंगलसंदोहान्यथावत्क्रमपूर्वकम् ॥
दिव्यमंगलसंयोगान्मंदिरेवहुमंगले ॥ ४०० ॥ उपासतगिरिंमूर्त्ताऋतवःसर्वकामिकाः ॥ वायवःसुखदाश्चासन्संमार्जनविधौगिरेः ॥ १ ॥ हर्म्येषुश्रीःस्वयं
देवीकृतनानाप्रसाधना ॥ कांतिःसर्वेषुभावेषुऋद्धिश्चभरणाकुला ॥ २ ॥ चिंतामणिप्रभृतयोरत्नाश्शैलंसमंततः ॥ उपतस्थुर्लताश्चापिकल्पकाद्यामहाद्रु
माः ॥ ३ ॥ ओषध्योमूर्तिमत्यश्चादिव्यौषधिसमन्विताः ॥ रसाश्चधातवश्चैवसर्वेशैलस्यकिंकराः ॥ ४ ॥ किंकरास्तस्यशैलस्यव्यग्राश्चाश्रमव
र्तिनः ॥ नद्यःसमुद्रानिखिलाःस्थावरंजंगमंचयत् ॥ ५ ॥ तेसर्वेहिमशैलस्यमहिमानमवर्द्धयन् ॥ अभवन्मुनयोनागायक्षागंधर्वकिन्नराः ॥ ६ ॥
शंकरस्यापिविबुधागंधमादनपर्वते ॥ सज्जमंडनसंभारास्तस्थुर्निर्मलमूर्त्तयः ॥ ७ ॥ शर्वस्याथजटाजूटेचंद्रखंडंपितामहः ॥ व

बंधप्रणयोदारविस्फारितविलोचनः ॥ ८ ॥ कपालमालांविपुलांचामुंडामूर्ध्निबध्नती ॥ उवाचगिरिशंकालीपुत्रंजनयशंकर ॥ ९ ॥ योदैत्येंद्रकुलं हत्वामांरक्तैस्तर्पयिष्यति ॥ शौरिर्वेतंसिकारत्नंकंठाभरणमुज्वलम् ॥ ४१० ॥ भुजंगाभरणंगृह्यसज्जश्शंभोः पुरोभवत् ॥ शक्रोगजाजिनंतस्यवसाभ्यक्ताग्र पल्लवम् ॥ ४११ ॥ दध्रेसरभसंस्विद्यद्विस्तीर्णमुखपंकजम् ॥ वायवश्चवबुस्तीक्ष्णास्तीक्ष्णंहिमगिरिप्रभम् ॥ १२ ॥ वृषंविभूषयामासुर्हरयानंमनोजवम् ॥ विरेजुर्नयनान्तस्थाः शंभोः सूर्यानलेंदवः ॥ १३ ॥ स्वांद्युतिंलोकनाथस्यजगतः कर्मसाक्षिणः ॥ चिताभस्मसमाधत्तकपालेरजतप्रभम् ॥ १४ ॥ मनुजास्थिमयींमालांनिवबंधचपाणिना ॥ प्रेताधिपःपुरेदूरेसभयःसमवर्तत ॥ १५ ॥ नानाकारमहारत्नभूषणंधनदाहृतम् ॥ विहायोदीप्तसर्पेंद्रकट केनस्वपाणिना ॥ १६ ॥ कर्णोत्तंसंचकारेशोह्यमलंतक्षकंस्वयम् ॥ निष्पन्नाभरणंचैवप्रसाध्येशंप्रसाधनैः ॥ १७ ॥ तत्राप्येपानियमतोह्यभवन्व्य ग्रमूर्तयः ॥ मुमोचाभिनवान्सर्वरम्यशालिरसौषधीन् ॥१८॥ व्यग्रातुपृथिवीदेवीसर्वभावात्मनोरमा ॥ गृहीत्वावरुणः साक्षाद्रत्नाढ्याभरणानिच ॥ १९ ॥ पुष्पाणिचविचित्राणिनानारत्नमयानितु ॥ तस्थौसाभरणोदेवःसर्वज्ञःसर्वदेहिनाम् ॥ ४२० ॥ ज्वलनश्चापिदिव्यानिहैमान्याभरणानिच ॥ जातरूप पवित्राणिप्रयतः समुपस्थितः ॥ २१ ॥ वायुर्ववौचसुरभिःसुखसंस्पर्शनोविभुम् ॥ छत्रंचंद्रकरोद्दामंहासितंचशतक्रतुः ॥ २२ ॥ जग्राहमुदितःश्री मान्बाहुभिर्वज्रभूषणः ॥ जगुर्गंधर्वमुख्याश्चननृतुश्चाप्सरोगणाः ॥२३॥ वादयंतोतिमधुरंजगुर्गंधर्वकिन्नराः ॥ मुहूर्तोदितवस्तत्रजगुश्चननृतुश्चवै ॥ २४ ॥ चपलाश्चगणास्तस्थुर्लोडयंतोहिमाचलम् ॥ उपविष्टः क्रमाद्धाताविश्वकृद्भगनेत्रहा ॥ २५ ॥ चकारौद्वाहिकंकृत्यंपत्न्यासहयथोदितम् ॥ दत्ताघ्योंगि रिराजेनसुरवृंदैर्विनोदितः ॥ २६ ॥ अवसत्तांक्षपांतत्रपत्न्यासहपुरांतकः ॥ ततोगंधर्वगीतेननृत्येनाप्सरसामपि ॥ २७ ॥ स्तुतिभिर्देवदैत्यानांविबुद्धो विबुधाधिपः ॥ आमंत्र्यहिमशैलेंद्रंप्रभातेजाययासह ॥ २८ ॥ जगाममंदरगिरिंवायुवेगेनशृंगिणा ॥ ततोगतेभगवतिनीललोहितेसहोमयारतिमनु भूतभूधरः ॥ २९ ॥ सवांधवोभवतिहिकस्यनोमनोविशृंखलंजगतिहिकन्यकापितुः ॥ पुरोद्यानेषुरम्येषुविविक्तेषुवनेषुच ॥ ४३० ॥ सुरक्तहृदयोदे व्याविजहारभगाक्षिहा॥ततोबहुतिथेकालेपुत्रनाम्नागिरेःसुता॥३१॥सखीभिः सहिताक्रीडांचक्रेकृत्रिमपुत्रकैः ॥ कदाचिद्गंधतैलेनगात्रमभ्यज्यशैलजा॥३२॥ चूर्णैरुद्वर्तयामासमलेनापूरितांतनुम् ॥ तदुद्वर्त्तनकंगृह्यनरंचक्रेगजाननम् ॥ ३३ ॥ पुरुपंक्रीडतींदेवीतच्चाप्यक्षिपदंभसि ॥ जाह्नव्याशिवयासख्या ततःसोभूद्बृहत्तनुः ॥ ३४ ॥ कायेनातिविशालेनजगदापूरयत्तदा ॥ पुत्रेत्युवाचतंदेवीपुत्रेत्युचेचजाह्नवी ॥ ३५ ॥ गांगेयइतिदेवैस्तुपूजितोभूद्गजाननः ॥ विनायकाधिपत्यंचददावस्यपितामहः ॥ ३६ ॥ पुनःसाक्रीडतीचक्रेतरुंचवरवर्णिनी ॥ मनोज्ञमंकुरंरूढमशोकस्यशुभानना ॥ ३७ ॥ वर्द्धयामासतं

चापिकृतसंस्कारमंगलम् ॥ बृहस्पतिमुखैर्विप्रैर्दिवस्पतिपुरोहितैः ॥ ३८ ॥ ततोदेवैःसमुनिभिःप्रोक्तादेवीत्विदंवचः ॥ अधुनादर्शितेमार्गेमर्यादांकर्तुम हसि ॥ ३९ ॥ फलंकिंभवितादेविकल्पितैस्तरुपुत्रकैः ॥ इत्युक्ताहर्षपूर्णांगीप्रोवाचातिशुभांगिरं ॥ ४४० ॥ एकंनिरुदकेग्रामेयःकूपंकारयेद्बुधः ॥ बिंदौ बिंदौचतोयस्यसवसेद्वत्सरंदिवि ॥४१॥ दशकूपसमावापीदशवापीसमोह्रदः ॥ दशह्रदसमाकन्यादशकन्यासमोद्रुमः ॥४२॥ एषावैशुभमर्यादानियतालो कभाविनी ॥ इत्युक्तास्तुततोविप्राबृहस्पतिपुरोगमाः ॥ ४३ ॥ जग्मुःस्वमंदिराण्येवभवानींवंद्यमातरं ॥ गतेषुतेषुदेवोपिशंकरःपर्वतात्मजां ॥ ४४ ॥ पाणिनालम्व्यमानेननस्वमावासमगच्छत ॥ चित्तप्रसादजननंप्रासादाट्टालगोपुरं ॥ ४५ ॥ लंबमौक्तिकदामानंमालिकाकुलवेदिकं ॥ सुनद्धकलधौतंचक्री डागृहमनोगतं ॥ ४६ ॥ प्रकीर्णकुसुमामोदमत्तालिकुलकूजितं ॥ किन्नरोद्गीतसंगीतगृहांतरितभित्तिकम् ॥ ४७ ॥ सुगंधिधूपसंघातंमनःप्राप्यमलक्षितं ॥ क्रीडामयूरनारीभिरभितोरभसार्पितं ॥ ४८ ॥ हंससंघातसंदिष्टस्फटिकस्तभंतोरणं ॥ अनाविलमसंभ्रांत्याबहुशःकिन्नराकुलं ॥ ४९ ॥ शुकैर्यत्राभिदृश्यं तेपद्मरागविनिर्मिताः ॥ भित्तयोजातिसंभ्रांत्याप्रतिबिंबितमौक्तिकाः ॥४५०॥ तत्राक्षैःप्रिययादेवोविहर्तुमुपचक्रमे ॥ स्वच्छेंद्रनीलभूभागेक्रीडंतौयत्रसंस्थि तौ ॥ ५१ ॥ वपुःसहायतांप्राप्तौविनोदरसनिर्वृतौ ॥ एवंप्रक्रीडतोस्तत्रदेवीशंकरयोस्तदा ॥ ५२ ॥ प्रादुर्भूतोमहाशब्दःपतितांबरगोचरः ॥ तच्छ्रुत्वाकौ तुकादेवीकिमेतदितिशंकरम् ॥ ५३ ॥ पर्यपृच्छत्सुरवरंहरंविस्मितपूर्वकं ॥ उवाचदेवोनैतत्तेदृष्टपूर्वंशुचिस्मिते ॥ ५४ ॥ एतेगणेशाःक्रीडंतेशैलेस्मि न्मत्प्रियाःसदा ॥ तपसाब्रह्मचर्येणनामभिःक्षेत्रसेवनैः ॥ ५५ ॥ यैरहंतोषितःपूर्वंतएतेमनुजोत्तमाः ॥ मत्समीपमनुप्राप्ताममहृद्याःशुभानने ॥ ५६ ॥ कामरूपामहोत्साहामहारूपगुणान्विताः ॥ कर्मभिर्विस्मयंतेपांप्रयामिबलशालिनाम् ॥ ५७ ॥ सामरस्यास्यजगतःसृष्टिसंहरणक्षमाः ॥ ब्रह्मचन्द्रेंद्रगंधर्वै स्सकिन्नरमहोरगैः ॥ ५८ ॥ विवर्जितोप्यहंनित्यंनैभिर्विरहितोरमे ॥ हृद्यामेचारुसर्वाङ्गितएतेक्रीडितागिरौ ॥ ५९ ॥ इत्युक्तातुतदादेवीत्यक्त्वातंविस्म याकुला ॥ गवाक्षांतरमासाद्यप्रेक्षतेचकितानना ॥४६०॥ यावंतस्तेकृशादीर्घाह्रस्वाःस्थूलामहोदराः ॥ व्याघ्रेभवदनाःकेचित्केचिन्मेपाजरूपिणः ॥६१॥ अनेकप्राणिरूपाश्चज्वालास्याःकृष्णपिंगलाः ॥ सौम्याभीमाःस्मितमुखाःकृष्णपिंगजटास्सदा ॥ ६२ ॥ नानाविहंगवदनानानाविधसुराननाः ॥ कौशेयच र्मवसनानग्नाश्चान्येविरूपिणः ॥ ६३ ॥ गोकर्णागजकर्णाश्चबहुवक्रेक्षणोदराः ॥ बहुपादाबहुभुजादिव्यनानास्त्रपाणयः ॥ ६४ ॥ अनेककुसुमापीडा नानाव्याकुलभीषणाः ॥ कृतनानायुधधरानानाकवचभूषणाः ॥ ६५ ॥ विचित्रवाहनारूढादिव्यरूपावियच्चराः ॥ वीणावाद्यरवोद्घुष्टानानास्थानकन र्तकाः ॥ ६६ ॥ गणेशांस्तांस्तथादृष्ट्वादेवीप्रोवाचशंकरम् ॥ ॥ देव्युवाच ॥ गणेशाःकतिसंख्याताःकिंनामानःकिमात्मकाः ॥ ६७ ॥ एकैकशोमम

ब्रूहिनिष्ठितायेपृथक्पृथक् ॥ शंकरउवाच ॥ कोटिकोटिश्चसंख्यातानानाविख्यातपौरुषाः ॥ ६८ ॥ जगदापूरितंसर्वमेभिर्भीमैर्महाबलैः ॥ सि
द्धक्षेत्रेषुरथ्यासुजीर्णोद्यानेषुवेश्मसु ॥ ६९ ॥ दानवानांशरीरेषुबालेषून्मत्तकेषुच ॥ एतेविशंतिमुदितानानाहारविहारिणः ॥ ४७० ॥ ऊष्मपाःफेन
पाश्चैवधूमपामधुपायिनः ॥ मेदाहारारुधिरपास्सर्वभक्षाह्यभोजनाः ॥ ४७१ ॥ देवादास्तापसाहारानानावाद्यरतिप्रियाः ॥ नहिवक्तुमनंतत्वाच्छक्यन्ते
हिगणाःपृथक् ॥ ७२ ॥ ॥ देव्युवाच ॥ नागत्वगुत्तरासंगःशुद्धांगोमुंजमेखली ॥ मनःशिलेनकल्केनचपलोरंजिताननः ॥ ७३ ॥ भृंगदष्टोत्पलानांच
स्रग्दामामधुराकृतिः ॥ पाषाणशकलोत्तानकांस्यतालप्रवर्तकः ॥७४॥ असौगणेश्वरोदेवकिंनामाकिन्नरानुगः ॥ यएषगणगीतेषुदत्तकर्णोमुहुर्मुहुः ॥ ७५ ॥
शर्वउवाच ॥ ॥ सएषवीरकोदेविसदामेहृदयप्रियः ॥ नानाश्चर्यगुणाधारोगणेश्वरगणार्चितः ॥ ७६ ॥ ॥ देव्युवाच ॥ ॥ ईदृशस्यसुतस्यास्ति
ममोत्कंठापुरांतक ॥ कदाहमीदृशंपुत्रंद्रक्ष्याम्यानंददायकं ॥ ७७ ॥ ॥ शर्वउवाच ॥ ॥ एषएवसुतस्तेस्तुनयनानंदकारकः ॥ त्वयामात्राकृतार्थो
हिवीरकोपिसुमध्यमे ॥ ७८ ॥ इत्युक्ताप्रेषयामासविजयांहर्षणोत्सुकां ॥ वीरकानयनायाशुदुहिताभूभृतःसखीं ॥ ७९ ॥ सावरुह्यत्वरायुक्ताप्रासादादं
बरस्पृशः ॥ विजयोवाच ॥ गणपंगणमध्यस्थंसूर्यकोटिप्रवर्तनम् ॥ ४८० ॥ एहिवीरकचापल्यात्त्वयादेवीप्रतोषिता ॥ त्वामाह्वयतिचेत्युक्तस्त्यक्त्वा
पाषाणखंडकम् ॥ ८१ ॥ देव्याः सपीपमागच्छद्विजयानुगतः शनैः ॥ प्रासादशिखरोत्फुल्लरक्तांबुजनिभद्युतिः ॥ ८२ ॥ तंदृष्ट्वाप्रस्थितान
ल्पस्वादुक्षीरपयोधरा ॥ ॥ गिरिजोवाच ॥ ॥ पिबक्षीरमिदंवत्ससुतंपिबयथेच्छकम् ॥ ८३ ॥ उवाचदेवीसस्नेहंगिरामधुरवर्णया ॥ एहिसद्यो
हिजातोसिमेपुत्रकोदेवदेवेनदत्तोधुनावीरक ॥ ८४ ॥ उक्त्वत्यंकआधायपर्यष्वजत्तंकपोलेचुचुंबागराण्नंदिनी ॥ मूर्ध्न्युपाघ्रायसंमार्ज्यगात्राणिचा
भूषयामासदिव्यैःस्वयंभूषणैः ॥ ८५ ॥ किंकिणीमेखलानूपुरैःसन्मणिप्रोतकेयूरहारैरमूल्यैर्गुणैः ॥ कोमलैःपल्लवैश्चित्रितश्चारुभिर्मंगलैःकंकणै
र्दिव्यमंत्रोद्भवैः ॥ ८६ ॥ तस्यशुद्धैस्ततोभूरिभिश्चाकरोन्मिश्रसिद्धार्थकैरङ्गरक्षाविधिं ॥ एवमादायचोवाचकृत्वास्रजंमूर्ध्निगोरोचनापत्रभंगोज्ज्वलैः॥८७॥
वत्सवत्साधुनाक्रीडसार्द्धंगणैरप्रमत्तोव्रजश्वभ्रवर्जंशनैः ॥ व्यालमालाकुलाःशैलसानुद्रुमादंतिभिर्भग्नशाखाःपरंभंगिनः ॥ ८८ ॥ जाह्नवीमंडल
क्षुब्धतोयाकुलंमाविशेथाबहुव्याघ्रजुष्टेवने ॥ वत्ससंख्येषुदुर्गेषुयद्वरिकापुत्रभावायतांस्वच्छचित्तोजनः ॥ ८९ ॥ प्रार्थितंभव्यमायातिभाविन्यसौ
भाव्यतांसोपिनिर्वर्त्यसर्वैर्गुणैः ॥ एवमुक्तोनयावीरकोमातरंसस्मयन्नाहलीलावशाविष्टधीः ॥ ४९० ॥ एषमात्रास्वयंमेकृतःकंकणःपत्रकश्चित्रितःपाटलै
र्बिंदुभिः ॥ चारुपुष्पैरियंमालतीभिःकृतामालिकामेशिरस्याहिताकोमला ॥ ९१ ॥ तोषयामीश्वरीमित्ययंसत्वरंचिंतयित्वाव्रजद्वाह्यतःक्रीडनम् ॥

स्वैर्गणैः संयुतो वीरको हर्षितो दक्षिणात्पश्चिमं पश्चिमादुत्तरम् ॥ ९२ ॥ उत्तरात्पूर्वमभ्येत्य सख्यायुता प्रेक्षते तं गवाक्षांतराद्वीरकं ॥ शैलपुत्री बहिः क्रीडितारं जगत्स्नेहतः पुत्रलुब्धा यतस्सोत्रकः ॥ ९३ ॥ मोहमायाति यः स्वल्पवेत्ता जडो मांसविण्मूत्रसंघातदेहोद्वहः ॥ द्रष्टुमभ्यंतरं नाकवासेश्वरेष्विन्दुपौलिंप्रविष्टेषु कक्षांतरम् ॥ ४९४ ॥ वाहनान्येवमारोहमाणास्ततो लोकपालास्त्रपूगं मुहूर्त्तावधि ॥ खड्ग एषो विखड्गाकरो निर्मलः कुंतकः कस्य केनाहृतो ब्रूत नः ॥ ९५ ॥ नो भवेद्धस्त दंडेन किं ब्रूमहे भीममूर्त्यं गणेनास्ति कृत्यं गिरौ ॥ पाश एषोस्ति तेनात्र को बध्यते मा वृथा लोकपालानुगास्तिष्ठत ॥ ४९६ ॥ एवमेवैतदित्यब्रुवंस्ते तदा वीक्ष्य देवानुगं वीरकं रक्षकं ॥ प्राह देवी वने पर्वते निर्जराध्यग्निशाला मुखे भूतले भूतपाः ॥९७॥ निर्झरांभोनिपातेषु नो मज्जतात्पुष्पजालावनद्धेषु धामस्वपि ॥ प्रोच्चनानाद्रिकुंजावगाहेष्वथो मारुतास्फोटसंरक्षणे कामतः ॥ ९८ ॥ कांचनोत्तुंगशृंगावरोहक्षितौ हैमरेणूत्करासंगपिंगद्युतिः ॥ खेचराणां वने चापि रम्ये त्वभौ रूपसंपत्प्रकारो गणो वासितुम् ॥ ९९ ॥ मंदरे कंदरे चारुवापीतटे कुन्दमंदारपुष्पप्रवालांबुजे ॥ सिद्धनारीभिरापीतरूपामृतं विस्तृतैर्नेत्रमात्रैरनुन्मेषिभिः ॥५००॥ वीरकं शैलपुत्री निमेषांतरादस्मरत्पुत्रगृध्नुर्विनोदार्थिनी ॥ सोपि तादृक्क्षणावाप्तपुण्योदयो यो हि जन्मांतरेस्यात्मजत्वं ततः ॥ १ ॥ क्रीडतस्तस्य तृप्तिः कथं जायते योपि भावाज्ज्वलद्धेधसा तेजसा ॥ कल्पितः प्रेक्षणं दिव्यगीतक्षणं नृत्यलोलैर्गणेशैः प्रवृत्यक्षणं ॥२॥ सिंहनादाकुले गंडशैले ज्वलद्रत्नजाले बृहत्सालताले क्षणम् ॥ फुल्लनानातमोल्लमल्लिकाले क्षणं वृक्षमूले विलोलोमराले क्षणम् ॥ ३ ॥ स्वल्पपंके जले पंकजांके क्षणं मातुरंके शुभे निष्कलंके क्षणम् ॥ परिक्रीडते बाललीलाविसारी गणेशाधिपो देवतानंदकारी ॥ ४ ॥ निकुंजेषु विद्याधरोद्गीतशीलः पिनाकीव लीलाविलासे सलीलः ॥ प्रकाश्य भुवनं गोभिस्ततो दिनकरे गते ॥ ५ ॥ देशांतरं तदा पश्चाद्दूरस्थो धरणीधरः ॥ मित्रत्वमस्य सुहृदं हृदये द्योतयन्निव ॥ ६ ॥ नित्यमाराधितो विप्रैः श्रीमान्विघनसः सुतः ॥ नाकरोत्स हितुमेरुरुपकारं पतिष्यतः ॥ ७ ॥ जनेष्वेषा व्यवस्थेति श्रूयते स्खलितो ह्यधः ॥ दिने नानुगतो भानुः स्वजनं परिपूरयन् ॥ ८ ॥ संध्याबद्धांजलिपुटा मुनयोभिमुखा रविम् ॥ यावदासते शीघ्रं निवार्योष्णाभिभाविताम् ॥ ९॥ व्यजृंभताथ लोकेस्मिन्क्रमाद्वैभावरं तमः ॥ कुटिलस्येव हृदये कालुष्यं दूषयन्मनः ॥५१० ॥ ज्वलत्फणिफणारत्नदीपोद्योतितभित्तिके ॥ शयने शशिसंघातरत्नवस्त्रोत्तरच्छदे ॥११॥ नानारत्नद्युतिलसच्छक्रचापविडंबके ॥ रत्नैः किंकिणिजालेन लसन्मुक्ताकलापके ॥ १२ ॥ कमनीयचलल्लीलावितानाच्छादितांबरे ॥ मंदरे मन्दसंचारं गते गिरिसुतायुतः ॥ १३ ॥ तस्थौ गिरिसुताबाहुलतामिलितकंधरः ॥ शशिमौलिः सितज्योत्स्नास्फारपूरितगोचरः ॥ १४ ॥ गिरिजाप्यसितापांगी नीलोत्पलदलच्छविः ॥ विभावर्या च संपृक्ता बभूवातीव गोमयी ॥ १५ ॥ तामुवाच ततो देवः क्रीडाकेलिकलायुताम् ॥५१६॥ इति श्रीपाद्मपु

राणेप्रथमेसृष्टिखंडेगौरीविवाहवर्णनंनामत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ शर्वउवाच ॥ शरीरेममतन्वंगिसितेभास्यसितद्युतिः ॥ भुजंगीवासिताशुभ्रे संश्लिष्टाचंदनेतरौ ॥ १ ॥ चंद्रातपेनसंपृक्तारुधिराम्बरसंवृता ॥ रजनीवासितेपक्षेद्दष्टिदोषंददासिमे ॥ २ ॥ इत्युक्तागिरिजातेनमुक्तकंठापिनाकिनम् ॥ उवाचकोपरक्ताक्षीभ्रुकुटीविकृतानना ॥ ३ ॥ देव्युवाच ॥ स्वकृतेनजनःसर्वोजाड्येनपरिभूयते ॥ अवश्यमर्थीप्राप्नोतिखंडनंशशिमंडन ॥ ४ ॥ तपोभिर्दीर्घचरितैर्यात्वांप्रार्थितवत्यहं ॥ तस्यामेनियतस्त्वेषह्यवमानःपदेपदे ॥ ५ ॥ नैवास्मिकुटिलाशर्वविषमानचधूर्जटे ॥ सविषस्त्वंजगत्ख्यातोव्यक्तदोषाकराश्रयः ॥ ६ ॥ त्वंहिमुष्णासिदशनान्नेत्रहंताभगस्यच ॥ आदित्यस्त्वांविजानातिभगवान्द्वादशात्मकः ॥ ७ ॥ मूर्ध्निशूलंजनयसिस्वैर्दोषैर्मामधिक्षिपन् ॥ यस्त्वंमामात्थकृष्णेतिमहाकालोसिविश्रुतः ॥ ८ ॥ यास्याम्यहंपरित्यक्तुमात्मानंतपसागिरिम् ॥ जीवंत्यानमयाकृत्यंधूर्तेनपरिभूतया ॥ ९ ॥ कापालिकेनक्षुद्रेणश्मशानेनित्यवासिना ॥ भूत्याविलिप्तस्वांगेनमातृमध्यस्थचारिणा ॥ १० ॥ निशम्यतस्यावचनंकोपतीक्ष्णाक्षरंहरः ॥ उवाचानिष्टसंभ्रांतःप्रचलेनेंदुमौलिना ॥ ११ ॥ शर्वउवाच ॥ ॥ अगात्मजासिगिरिजेनाहंनिंदापरस्तव ॥ चाटूक्तिबुध्यातुमयाकृतउन्मादसंश्रयः ॥ १२ ॥ विकल्पःस्वस्थचित्तेतुगिरिजेनममक्रमात् ॥ यद्येवंकुपिताभीरुतत्तवाहंनवैपुनः ॥ १३ ॥ नर्मवादीभविष्यामिजहिकोपंशुचिस्मिते ॥ शिरसाप्रणतेनैषरचितस्तेमयांजलिः ॥ १४ ॥ निहीनोह्यपमानेननिंदितेनैतिविक्रियाम् ॥ असतांतुसतांनस्यान्मर्मस्पृष्टोनरःकिल ॥ १५ ॥ अनेकैश्चाटुभिर्देवीदेवेनप्रतिबोधिता ॥ कोपंतीव्रंनतत्याजसतीमर्मणिघट्टिता ॥ १६ ॥ अवष्टब्धमथाच्छिद्यवासःशंकरपाणिना ॥ विपर्यस्तालकावेगाद्गन्तुमैच्छच्चशैलजा ॥ १७ ॥ तस्याव्रजंत्याःकोपेनपुनराहपुरांतकः ॥ सत्यंसर्वैरवयवैस्तनोपिसदृशंपितुः ॥ १८ ॥ हिमाचलस्यशृंगस्थमेवजालाकुलंमनः ॥ तथादुरवगाह्येभ्योगहनोहितवाशयः ॥ १९ ॥ काठिन्यमश्मसारेभ्योवनेभ्योबहुलांगता ॥ कुटिलत्वंनिम्नगाभ्योदुःसेव्यत्वंहिमादपि ॥ २० ॥ संक्रांतंसर्वमेवैतत्तन्वंगिहिमभूधरात् ॥ इत्युक्तासापुनःप्राहगिरिशंशैलकन्यका ॥ २१ ॥ कोपकंपितमूर्द्धासाप्रस्फुरद्दशनच्छदा ॥ उमोवाच ॥ स्यात्सर्वंदोषदानेननिंदायांगुणिनोबलात् ॥ २२ ॥ तवापिदुष्टसंपर्कात्संक्रांतंसर्वमेवहि ॥ व्यालेभ्योनेकजिह्वत्वंभस्मनोऽस्नेहवृत्तिता ॥ २३ ॥ हृत्कालुष्यंशशांकोत्थंदुर्बोधत्वंविषादपि ॥ किंचात्रबहुनोक्तेनअलंवाचांश्रमेणते ॥ २४ ॥ श्मशानवासान्निर्भीस्त्वंनग्नत्वात्तवनत्रपा ॥ निर्घृणत्वंकपालित्वाद्दयातेविगताचिरम् ॥ २५ ॥ इत्युक्त्वामंदिरात्तस्मान्निर्जगामहिमाद्रिजा ॥ तस्यांव्रजंत्यांदेवेश्यांगणैःकिलकिलाकृता ॥ २६ ॥ क्वमातर्गच्छसीत्युक्त्वारुदद्भिर्धावितंपुनः ॥ विष्टभ्यचरणौदेव्यावीरकोबाष्पगद्गदः ॥ २७ ॥ प्रोवा

२४

चमातःकिन्नेवेतत्कयासिकुपितातुरा ॥ अहंत्वामनुयास्यामिव्रजंतींस्नेहवर्जिताम् ॥ २८ ॥ नोचेत्पतिष्येशिखराद्गिरेरस्यत्वयोज्झितः ॥ उन्नम्यवद
नंदेवीदक्षिणेनतुपाणिना ॥ २९ ॥ उवाचवीरकंमातात्वंशोकंपुत्रमाकृथाः ॥ शैलाग्रात्पतितुंनैवनचगंतुंमयासह ॥ ३० ॥ युक्तंतेपुत्रगच्छामिये
नकार्येणतच्छृणु ॥ कृष्णेत्युक्ताहरेणाहंस्तंभितास्म्यवमानिता ॥ ३१ ॥ साहंतपःकरिष्यामियेनगौरीत्वमाप्नुयाम् ॥ एषस्त्रीलंपटोदेवोयातायांम
य्यनंतरम् ॥ ३२ ॥ द्वाररक्षात्वयाकार्यानित्यंरन्ध्रान्ववेक्षणम् ॥ यथानकाचित्प्रविशेद्योषित्तत्रहरांतिकम् ॥ ३३ ॥ दृष्ट्वापरस्त्रियंचापिवदेथाममपुत्रक ॥
शीघ्रमेवकरिष्यामियथायुक्तमनंतरम् ॥ ३४॥ एवमस्त्वितिदेवेशींवीरकोवाचसांप्रतम् ॥ मातुराज्ञामृताहारप्लावितांगोगतज्वरः ॥३५॥ जगामरक्षांस
द्रष्टुंप्रणिपत्यतुमातरम् ॥ देवीचापश्यदायांतींसखींमातुर्विभूषिताम् ॥ ३६ ॥ कुसुमामोहिनींनामतस्यशैलस्यदेवताम् ॥ सापिदृष्ट्वागि
रिसुतांस्नेहविक्लवमानसा ॥ ३७ ॥ क्वपुत्रिगच्छसीत्युच्चैरालिंग्योवाचदेवता ॥ सातस्याःसर्वमाचख्यौशंकरात्कोपकारणम् ॥ ३८ ॥ पुनश्चोवाचगिरिजा
देवतांमातृसंमिताम् ॥ उमोवाच ॥ नित्यंशैलाधिराजस्यदेवतात्वमनिंदिते ॥ ३९ ॥ सर्वतःसन्निधानंतेमनसातीववत्सला ॥ अतस्तुते
प्रवक्ष्यामियद्विधेयंत्वयांबिके ॥ ४० ॥ अन्यस्त्रीसंप्रवेशस्तुत्वयारक्ष्यःप्रयत्नतः ॥ सरहस्येप्रयत्नेननिषेव्यःसततंगिरौ ॥ ४१ ॥ पिनाकिनःप्रविष्टा
यांवक्तव्यंमेत्वयानघे ॥ ततोहंसंविधास्यामियत्क्षमंतदनंतरम् ॥ ४२ ॥ इत्युक्तातांतथेत्युक्त्वाजगामसागिरिंशुभा ॥ उमापिपितुरुद्यानंजगामा
द्रिसुताद्भुतम् ॥ ४३ ॥ अंतरिक्षंसमाविश्यमेघमालाविलप्रभम् ॥ भूषणानिततोन्यस्यवृक्षवल्कलधारिणी ॥ ४४ ॥ ग्रीष्मेपंचाग्निसंतप्तावर्षा
सुचजलोषिता ॥ वन्याहारानिराहाराशुष्कस्थंडिलशायिनी ॥ ४५ ॥ एवंसाधयतीतत्रतपःसाचव्यवस्थिता ॥ज्ञात्वागतांगिरिसुतांदैत्यस्तत्रांतरब
ली ॥ ४६ ॥ अंधकस्यसुतोदृष्टः पितुर्वधमनुस्मरन् ॥ देवान्सर्वान्विजित्याजौवकभ्रातारणोत्कटः ॥ ४७ ॥ आडिर्नामांतरप्रेक्षीसततंचंद्रमौलिनः ॥
आजगामामररिपुः पुरंत्रिपुरघातिनः ॥ ४८ ॥ सतत्रागत्यददृशेवीरकंद्वार्यवस्थितम् ॥ विचिंत्यसोपिचवरंदत्तंकमलयोनिना ॥४९॥ हतेकिलांधकेदैत्ये
गिरिशेनासुरद्विषा ॥ आडिश्चकारविपुलंतपःपरमदारुणम् ॥५०॥ समागत्याब्रवीद्ब्रह्मातपसापरितोषितः॥किमाडेदानवश्रेष्ठतपसाप्राप्तुमिच्छसि ॥५१॥
ब्रह्माणमाहदैत्यस्तुनिर्मृत्युत्वमहंवृणे ॥ ब्रह्मोवाच ॥ जातानामिहसंसारेविनामृत्युंनयुज्यते ॥ ५२ ॥ यतस्ततोपिदैत्येंद्रमृत्युःप्राप्यश्शरीरिभिः॥इत्युक्तो
दैत्यसिंहस्तुप्रोवाचांबुजसंभवम् ॥५३॥ रूपस्यपरिवर्तोमेयदास्यात्पद्मसंभव॥तदामृत्युर्ममभवेदन्यथात्वमरोस्म्यहम् ॥ ५४ ॥ इत्युक्तस्तुततोवाचतुष्टः
कमलसंभवः ॥ यदाद्वितीयोरूपस्यविवर्तस्तेभविष्यति ॥ ५५ ॥ तदातेभवितामृत्युरन्यथानभविष्यति ॥ इत्युक्तोमरतांमेनेदैत्यसूनुर्महाबलः ॥ ५६॥

तस्मिन्कालेत्वसंस्मृत्यतद्वधोपायमात्मनः ॥ प्रतिहर्तुर्दृष्टिपथेवीरकस्याभवंस्तदा ॥ ५७ ॥ भुजंगरूपीरंध्रेणप्रविवेशद्दशःपथम् ॥ परिहृत्यगणेशस्य दानवोरौद्रदुर्जयः ॥ ५८ ॥ अलक्षितोगणेशेनप्रविश्याथपरांतनुम् ॥ भुजंगरूपंसंत्यज्यजग्राहाथमहासुरः ॥ ५९ ॥ उमारूपंरमयितुंगिरिशंमूढचे तनः ॥ कृत्वामायामयंरूपमप्रतर्क्यंमनोहरम् ॥ ६० ॥ सर्वैरवयवैःपूर्णंसर्वाभिज्ञानबृंहितम् ॥ कृत्वाभगांतरेदंतैर्दैत्योवज्रमयंदृढम् ॥ ६१ ॥ तीक्ष्णा ग्रंबुद्धिमोहेनगिरिशंहंतुमुद्यतः ॥ कृत्वोमारूपसंस्थानंगतोदैत्योहरांतिकम् ॥ ६२ ॥ पापोरम्याकृतिश्चित्रभूषणांबरसंयुतः ॥ तंदृष्ट्वागिरिशस्तुष्टस्तमा लिंग्यमहासुरम् ॥ ६३ ॥ मन्यमानोगिरिसुतांसर्वैरवयवांतरैः ॥ अपृच्छत्साधुभावंतेगिरिपुत्रिनकृत्रिमम् ॥ ६४ ॥ यात्वंमदाशयंज्ञात्वाप्राप्तेहवरवर्णि नी ॥ त्वयाविरहितंशून्यंममस्थानंजगत्त्रयम् ॥ ६५ ॥ प्राप्ताप्रसन्नवदनेयुक्तमेवंविधंत्वयि ॥ इत्युक्तोदानवेंद्रस्तुतंवभाषेस्मितंशनैः ॥ ६६ ॥ सचाबु ध्यदभिज्ञानैः प्राहत्रिपुरघातिनम् ॥ ॥ दैत्यउवाच ॥ यातास्मितपसःकामाद्दूरंलब्धुंहिमाचलम् ॥ ६७ ॥ रतिश्चतत्रमेनाभूत्ततः प्राप्तात्वदंतिकम् ॥ इत्युक्तःशंकरःशंकांचित्तेप्राप्तोविचारयन् ॥ ६८ ॥ हृदयेनसमाधायदेवःप्रहसिताननः ॥ कुपिताकुपितंबुद्ध्वाप्रकृत्याचदृढव्रता ॥ ६९ ॥ अप्राप्तकामासं प्राप्ताकिमेतत्संविजानती ॥ इतिचिंत्यहरस्तस्याअभिज्ञानंविचारयन् ॥ ७० ॥ नापश्यद्वामपार्श्वेतुतदंकंपद्मलक्षणम् ॥ लोम्नामावर्तरचितंततोदेवः पिनाकधृक् ॥ ७१ ॥ बुद्ध्वातांदानवींमायामाकारंगूहयंस्ततः ॥ मेढ्रदंष्ट्रास्त्रमादायदानवंतमसादयत् ॥ ७२ ॥ नचाबुध्यततद्वृत्तंवीरकोद्वाररक्षकः ॥ कुसुमामोदिनंदृष्ट्वास्त्रीरूपंदानवेश्वरम् ॥ ७३ ॥ दूतेनमारुतेनाशुबोधिताहिमशैलजा ॥ श्रुत्वावायुमुखाद्देवीक्रोधरक्ताविलेक्षणा ॥ ७४ ॥ अपश्यद्वीरकं पुत्रंहृदयेनैवदूयता ॥ ॥ देव्युवाच ॥ मातरंमांपरित्यज्ययस्मात्वंस्नेहविक्लवाम् ॥ ७५ ॥ विहितावसरः स्त्रीणांशंकरस्यरहोविधौ ॥ तस्मात्ते मानुषेरूक्षाजडाहृदयवर्जिता ॥७६॥ गणेशाकारसदृशीशिलामाताभविष्यति ॥ निमित्तएषविख्यातोवीरकस्यसुतादरात् ॥ ७७ ॥ संभवेप्रक्रमेचैवविचि त्राख्यानसंश्रयः ॥ एवमुत्सृष्टशापायांगिरिपुत्र्यामनंतरं ॥ ७८ ॥ निर्जगाममुखात्क्रोधःसिंहरूपीमहाबलः ॥ सतुसिंहःकरालास्यःसटाजटिलकं धरः ॥ ७९ ॥ ऊर्ध्वप्रोद्भूतलांगूलोदंष्ट्रोत्कटमुखावटः ॥ व्यादितास्योलंबजिह्वःक्षामःकुक्षिबलादिषु ॥ ८० ॥ अस्यास्येवर्तितुंदेवीव्यवस्थितवतीतदा ॥ ज्ञात्वामनोगतंतस्याभगवांश्चतुराननः ॥ ८१ ॥ आजगामाश्रमपदंसंपदामाश्रयंयतः ॥ आगम्योवाचदेवेशोगिरिजांस्पष्टयागिरा ॥ ८२ ॥ ब्रह्मोवाच ॥ किंपुनःप्राप्तुकामासिकिमलभ्यंददामिते ॥ विरम्यतामतिक्लेशात्तपसोस्मान्मदाज्ञया ॥ ८३ ॥ तच्छ्रुत्वोवाचगिरिजागुरोगौरवयंत्रितं ॥ वाक्यं वाचाहरोद्गीर्णवर्णनिर्गमवांछितं ॥ ८४ ॥ ॥ देव्युवाच ॥ तपसादुष्करेणाप्तःपतिर्वैशंकरोमया ॥ समांश्यामलवर्णेतिबहुशःप्रोक्तवान्रहः ॥ ८५ ॥

तस्मादहंकांचनाभवर्णातन्नामसंयुता ॥ भर्तुर्भूतपतेरंगमेकतोनिर्विषंभवेत् ॥ ८६ ॥ तस्यास्तद्भाषितंश्रुत्वाप्रोवाचजगदीश्वरः ॥ एवंभवत्वंभूयश्चभर्तुर्देहार्द्धचारिणी ॥ ८७ ॥ ततस्तत्याजतांकृष्णांफुल्लनीलोत्पलत्वचं ॥ त्वक्चसाप्यभवद्भीमाघंटाहस्तात्रिलोचना ॥ ८८ ॥ नानाभरणसंपूर्णापीतकौशेयधारिणी ॥ तामब्रवीत्ततोब्रह्मादेवींनीलांबुजत्विषं ॥ ८९ ॥ निशेभूधरजादेहसंपर्कात्वंमदाज्ञया ॥ संप्राप्ताकृतकृत्यत्वमेकानंशापुरोह्यसि ॥ ९० ॥ यएषसिंहःप्रोद्भूतोदेव्याःक्रोधाद्वरानने ॥ सतेस्तुवाहनंदेविकेतौचास्तुमहावलः ॥ ९१ ॥ गच्छविंध्याचलंतत्रसुरकार्यंकरिष्यसि ॥ पंचालोनामयक्षोयंयक्षलक्षपदानुगः ॥ ९२ ॥ दत्तस्तेकिंकरोदेविमयामायाशतैर्युतः ॥ इत्युक्त्वाकौशिकीदेवीविंध्यशैलंजगामह ॥ ९३ ॥ उमापिप्राप्तसंकल्पाजगामगिरिशांतिकं ॥ प्रविशंतींतुतांद्वारादपहृत्यसमाहितः ॥ ९४ ॥ रुरोधवीरकोदेवींहेमवेत्रलताधरः ॥ तामुवाचचकोपेनरूपेतुव्यभिचारिणीं ॥९५ ॥ प्रयोजनंनतेत्रास्तिगच्छयावन्नभक्ष्यसे ॥ देव्यारूपधरोदैत्योदेवंवांचितुमागतः ॥ ९६ ॥ प्रविष्टोनचदृष्टोसौसचदेवेनघातितः ॥ घातितेचाहमाज्ञप्तोनीलकंठेनकोपिना ॥ ९७ ॥ द्वारेत्वनवधानंतेयस्मात्पश्यामिवैततः ॥ भविष्यसिनमेद्वास्थोवर्षपूगाननेकशः ॥ ९८ ॥ अतस्तेनात्रदास्यामिप्रवेशंगम्यतांद्रुतम् ॥ एकांमुक्त्वागिरिसुतांमातरंस्नेहवत्सलाम् ॥ ९९ ॥ प्रवेशंलभतेनान्यानारीकमललोचने ॥ इत्युक्त्वातुतदादेवीचिंतमायासचेतसा ॥ १०० ॥ नारीनैवसदैतेयोवायुर्मेयामभाषत ॥ वृथैववीरकश्शप्तोमयाक्रोधपरीतया ॥ १०१ ॥ अकार्यंक्रियतेमूढैःप्रायःक्रोधसमन्वितैः ॥ क्रोधेननश्यतेकीर्तिःक्रोधोहंतिस्थिरांश्रियम् ॥ २ ॥ अपरिच्छिन्नतत्वार्थापुत्रंशापितवत्यहं ॥ विपरीतार्थबुद्धीनांसुलभोविपदागमः ॥ ३ ॥ संचिंत्यैवमुवाचेदंवीरकंप्रतिशैलजा ॥ सज्जलज्जाविकारेणवदनेनाम्बुजत्विषा ॥ ४ ॥ देव्युवाच ॥ ॥ अहंवीरकतेमातानतेस्तुमनसोभ्रमः ॥ शंकरस्यास्मिदयितासुतातुहिनभूभृतः ॥ ५ ॥ ममगात्रच्छविभ्रांत्यामाशंकांपुत्रधारय ॥ तुष्टेनगौरतादत्ताममेयंपद्मजन्मना ॥ ६ ॥ मयाशप्तोस्यविदितेवृत्तांतेदैत्यनिर्मिते ॥ ज्ञात्वानारीप्रवेशंतुशंकरेरहसिस्थिते ॥ ७ ॥ ननिवर्तयितुंशक्यःशापःकिंतुब्रवीमिते ॥ शीघ्रमेष्यसिमानुष्यात्सर्वकामसमन्वितः ॥ ८ ॥ शिरसातुततोवंद्यमातरंपूर्णमानसः ॥ उवाचसाध्वींपूर्णेन्दुद्युतिंतुहिनशैलजां ॥ ९ ॥ वीरकउवाच ॥ नतसुरासुरमौलिलसन्मणिप्रवरकांतिकरालिनखाङ्घ्रिके ॥ नगसुतेशरणागतवत्सलेनवनमोवनतार्त्तिविनाशिनि ॥ ११० ॥ तपनमंडलमंडितकंधरेपृथुसुवर्णनगद्युतिहारिके ॥ विषमभंगविषंगमभीषितोगिरिसुतेभवतीमहमाश्रये ॥ ११ ॥ जगतिकाप्रणताभिमताददौझटितिसिद्धिमृतेभवतींयथा ॥ जगतिकांप्रणमेच्छशिशेखरोभुवनभृन्मुनयोभवतींयथा ॥ १२ ॥ विमलयोगविनिर्मितदुर्जयेसुतनुतुल्यमहेश्वरमंडली ॥ विदलितांधकबांधवसंहतिःसुरवरैःप्रथमं

त्वमभिष्टुता ॥११३॥ सितसटापटलोद्धतकंधराभवमहामृगराजरयस्थिता ॥ विमलशक्तिमुखानलपिंगलायतभुजौघनिपिष्टमहासुरा॥१४॥निगदिताभुव
नैरीतिचंडिकाजननिशुंभनिशुंभनिषूदिनी ॥ प्रणतचिंतितदाभवदानवप्रशमनैकरतिस्तरसाभुवि ॥ १५ ॥ वियतिवायुपथेज्वलनाकुलेवनितलेतवदे
विचयद्वपुः ॥ तदजितेप्रतिमेप्रणमाम्यहंभुवनभाविनितेभववल्लभे ॥१६॥ जलधयोललितोद्धतवीचयोहुतवहोद्युतिदग्धचराचरः ॥ फणसहस्रभृतश्चभुजं
गमास्त्वमभिधास्यसिमामभयंकरा ॥ १७ ॥ भगवतिस्थिरभक्तजनाश्रयेप्रतिगतोभवतीचरणाश्रयं ॥ करणजातमिहास्तुममाक्षयैतवविलासमुखा
नुभवास्यदम् ॥१८॥ सुप्रसन्नाततोदेवीवीरिकस्येतिसंस्तुता॥प्रविवेशशुभंभर्तुर्भुवनंभूधरात्मजा ॥१९॥ द्वास्थोऽपिवीरकोदेवान्हरदर्शनकांक्षिणः॥व्यसर्जे
यत्स्वकानेवगृहानादरपूर्वकं॥१२०॥ नास्त्यत्रावसरोदेवादेव्याःसहवृषाकपिः॥निभृतःक्रीडतीत्युक्ताययुस्तेचयथागतं॥२१॥ गतेवर्षसहस्रेतुदेवास्त्वरि
तमानसाः ॥ ज्वलनंचोदयामासुर्ज्ञातुंशंकरचेष्टितं ॥ २२ ॥ प्रविश्यपक्षिरंध्रेणशुकरूपीहुताशनः ॥ ददर्शशयनेसर्वंरतौगिरिजयासह ॥ २३ ॥ ददर्शतंच
देवेशोहुताशंशुकरूपिणं ॥ तमुवाचमहादेवःकिंचित्कोपसमन्वितः ॥ २४ ॥ शर्वउवाच ॥ निषिक्तमर्धंदेव्यांमेवीर्यंयेनशुकविग्रह ॥ लज्जयाविरतिश्चास्य
त्वमर्धंपिबपावक॥२५॥यस्मात्तुत्वत्कृतेविघ्नंतस्मात्त्वय्युपपद्यते॥ इत्युक्तःप्राञ्जलिर्वह्निरपिबद्वीर्यमाहितं॥२६॥तेनाप्लुतास्ततोदेवास्तन्मुखाऋभवोयतः॥
विपाट्यजठरंतेषांवीर्यंमाहेश्वरंततः ॥ २७ ॥ निष्क्रांतंतत्तहेमाभंविततेशंकराश्रमे ॥ तस्मिन्सरोऽभज्जातंविमलंबहुयोजनं ॥ २८ ॥ प्रोत्फुल्लहेमकमलं
नानाविहगनादितम् ॥ तच्छ्रुत्वातुसरोदेवीजातंहेममहांबुजम् ॥ २९ ॥ जगामकौतुकाविष्टातत्सरःकनकांबुजम् ॥ तत्रकृत्वाजलक्रीडांतदब्जकृ
तशेखरा ॥ १३० ॥ उपविष्टाततस्तस्यतीरेदेवीसखीवृता ॥ पातुकामाचतत्तोयंस्वादुनिर्मलपंकजम् ॥ ३१ ॥ अपश्यत्कृत्तिकास्तास्सपडर्कद्युति
सन्निभाः ॥ पद्मपत्रेतुतद्वारिगृहीत्वाप्रस्थितागृहम् ॥ ३२ ॥ हर्षात्सोवाचपास्यामिपद्मपत्रेस्थितंपयः ॥ ततःस्ताऊचुरखिलाःकृत्तिकाहिमशै
लजाम् ॥ ३३ ॥ कृत्तिकाऊचुः ॥ दास्यामोदयितेगर्भंरांभूतोयोभविष्यति ॥ सोस्माकमपिपुत्रःस्यादस्मत्राताचवृत्तिमान् ॥३४॥ त्रिषुलोकेषुविख्यातः
सर्वेष्वपिशुभानने ॥ इत्युक्तोवाचगिरिजाकथंमद्गात्रसंभवैः ॥ ३५ ॥ सर्वैरवयवैर्युक्तोभवतीभ्यःसुतोभवेत् ॥ ततस्तांकृत्तिकाऊचुर्विधास्या
मोस्यैवेवयम् ॥ ३६ ॥ उत्तमान्युत्तमांगानियद्येवंतुभविष्याति ॥ उक्तावैशैलजाप्राहभवत्वेवमनिंदिताः ॥ ३७ ॥ ततस्तुहर्षसंपूर्णाःपद्मपत्रास्थितंपयः ॥
तस्यैददुस्तयाचापितत्पीतंक्रमशोजलम् ॥ ३८ ॥ पीतेतुसलिलेचैवतस्मिन्नेवक्षणेवरः ॥ विपाट्यदेव्याश्चततोदक्षिणंकुक्षिमुद्गतः ॥ ३९ ॥ निश्चक्रामा
द्भुतोबालोरोगशोकविनाशनः ॥ प्रभाकरकरव्रातप्रकारप्रकरप्रभुः ॥ १४० ॥ गृहीतनिर्मलोदग्रशक्तिशूलांकुशोनलः ॥ दीप्तोमारयितुंदैत्यानु

त्थितःकनकच्छविः ॥ ४१ ॥ एतस्मात्कारणादेवकुमारश्चापिसोभवत् ॥ वामंविदार्यनिष्क्रांतस्ततोदेव्याःपुनःशिशुः ॥ ४२ ॥ स्कंदोथवदनाद्वह्नेःशुभ्रा
त्षड्वदनोरिहा ॥ कृत्तिकासलिलादेवशाखाभिःसविशेषतः ॥ ४३ ॥ शाखाःशिवाःसमाख्याताःषट्सुवक्त्रेषुविस्तृताः ॥ यतस्ततोविशाखोसौख्यातोलोके
षुषण्मुखः ॥ ४४ ॥ स्कंदोविशाखःषड्वक्त्रःकार्तिकेयश्चविश्रुतः ॥ पक्षेचैत्रस्यबहुलेपंचदश्यांमहाबलौ ॥ ४५ ॥ संभूतावर्कसदृशौविशाले
शरकानने ॥ सितेपक्षेतुपंचम्यांतथैतौपावकानलौ ॥ ४६ ॥ बालकाभ्यांचकारैकंसंध्यायामेवभूतये ॥ तस्यामेवततःषष्ठ्यामभिषिक्तोगुहः
प्रभुः ॥ ४७ ॥ सर्वैरमरसंघातैर्ब्रह्मोपेंद्रेंद्रभास्करैः ॥ गंधमाल्यैःशुभैःधूपैस्तथाक्रीडनकैरपि ॥ ४८ ॥ छत्रैश्चामरजालैश्चभूषणैश्चविलेपनैः ॥ अभिषिक्तो
विधानेनयथावत्षण्मुखःप्रभुः ॥ ४९ ॥ सुतामस्मैददौशक्रोदेवसेनेतिविश्रुताम् ॥ पत्न्यर्थंदेवदेवेशोददौविष्णुरथायुधम् ॥ १५० ॥ यक्षाणांदशलक्षाणि
ददावस्यधनाधिपः ॥ ददौहुताशनस्तेजोददौवायुश्चवाहनम् ॥ ५१ ॥ ददौक्रीडनकंत्वष्टाकुक्कुटंकामरूपिणम् ॥ एवंसुरास्तुतेसर्वेपरिवारमनन्त
कम् ॥ ५२ ॥ ददुर्मुदितचेतस्काःस्कंदायादित्यवर्चसे ॥ जानुभ्यामवनौस्थित्वासुरसंघास्तमस्तुवन् ॥ ५३ ॥ स्तोत्रेणानेनवरदंषण्मुखंमुख्यशःसुराः ॥
॥ देवाऊचुः ॥ ॥ नमःकुमारायमहाप्रभायस्कंदायचास्कंदितदानवाय ॥ ५४ ॥ नवार्कविद्युत्प्रतिमप्रभावनमोस्तुगुह्यायगुहायतुभ्यम् ॥ न
मोस्तुतेलोकभयापहायनमोस्तुतेलोककृपापराय ॥ ५५ ॥ नमोविशालामललोचनायनमोविशाखायमहाव्रताय ॥ नमोनमस्तेस्तुरणोत्कटायन
मोमयूरोज्ज्वलवाहनाय ॥ ५६ ॥ नमोस्तुकेयूरधरायतुभ्यंनमोधृतोदग्रपताकिनेते ॥ नमःप्रभावप्रणतायतेस्तुनमोऽस्तुघंटाधरधैर्यशालिने ॥ ५७ ॥
कुमारउवाच ॥ ॥ कंवःकामंप्रयच्छामिभवंतोब्रूतनिर्वृताः ॥ यद्यप्यसाध्यंकृत्यंनोहृदयेचिंतितंचिरम् ॥ ५८ ॥ इत्युक्तास्तुसुरास्तेनप्रोचुःप्रणत
मौलयः ॥ सर्वएवमहात्मानंगुहंमुदितमानसाः ॥ ५९ ॥ दैत्येंद्रस्तारकोनामसर्वामरकुलांतकृत् ॥ बलवान्दुर्जयस्तीक्ष्णोदुराचारोतिको
पनः ॥ १६० ॥ तमेवजहिदुर्धर्षंदैत्यंसर्वविनाशनम् ॥ उपस्थितःकृत्यशेषोह्यस्माकंचभयावहः ॥ ६१ ॥ हिरण्यकशिपुश्चोग्रोह्यवध्योदेवतागणैः ॥
यज्ञघ्नःपापकर्मावैयेनब्रह्मापितापितः ॥ ६२ ॥ एतौहरस्वभद्रंतेतावकंचमहाबलम् ॥ एवमुक्तस्तथेत्युक्त्वासर्वामरपदानुगः ॥ ६३ ॥ जगामजगतांनाथ
स्तूयमानोमरेश्वरैः ॥ तारकस्यवधार्थायजगतांकंटकस्यच ॥ ६४ ॥ ततश्चप्रेषयामासशक्रोगुढसमाश्रयः ॥ दूतंदानवसिंहस्यपरुषाक्षरवा
दिनम् ॥ ६५ ॥ सतुगत्वाब्रवीद्दैत्यमभयोभीमदर्शनम् ॥ दूतउवाच ॥ शक्रस्त्वामाहदेवेशोदैत्यकेतुंदिवस्पतिः ॥ ६६ ॥ तारकासुरतच्छत्त्याघट्य
स्वयथेच्छया ॥ यज्जगज्ज्वलनोद्दीप्तंकिल्बिषंचत्वयाकृतम् ॥ ६७ ॥ तस्याहंसादकस्तेद्यराजास्मिभुवनत्रये ॥ श्रुत्वैतदद्भुतंवाक्यंकोपसं

रक्तलोचनः ॥ ६८ ॥ उवाचदूतंदुष्टात्मानष्टप्रायविभूतिकः ॥ ॥ तारकउवाच ॥ दृष्टंतेपौरुषंशक्रशतशोथमहारणे ॥ ६९ ॥ निस्त्रपत्वान्नतेशांति
र्विद्यतेशक्रदुर्मते ॥ एवमुक्तेगतेदूतेचिंतयामासदानवः ॥ १७० ॥ नालब्धसंश्रयश्शक्रोवक्तुमेवमिहार्हति ॥ जातःस्कंदोधुनाशक्राज्ज्ञायतेस
मुपाश्रयात् ॥ ७१ ॥ निमित्तौघांस्तदादुष्टान्सोपश्यन्नाशवेदिनः ॥ पांसुवर्षमसृक्पातंगगनादवनीतले ॥ ७२ ॥ वामनेत्रप्रकंपंचवक्रशोषंमनोमय
म् ॥ स्वकानांवक्त्रपद्मानांम्लानतांचव्यलोकयत् ॥ ७३ ॥ दुष्टांश्चप्राणिनोरौद्रान्सोपश्यद्दुष्टवादिनः ॥ तदचिंत्यैवदितिजोन्यस्तचित्तोभ
वत्क्षणात् ॥ ७४ ॥ यावद्गजघटाघंटाघनत्काररवोत्कटाम् ॥ तद्वत्तुरंगसंघातहेषोत्साहविभूषिताम् ॥ ७५ ॥ सैन्यैस्सेनान्तरोदग्रध्वजराजैर्विराजिताम् ॥
विमानैश्चाद्भुताकारैश्चलितामलचामरैः ॥ ७६ ॥ विभूषणपिनद्धांचकिन्नरोद्गीतनादिताम् ॥ नानानाकतरूत्फुल्लकुसुमापीडधारिणीम् ॥ ७७ ॥
विशोकास्त्रपरिस्फारचर्मनिर्मलदर्शिनीं ॥ विद्युत्पुष्टद्युतिधरांनानावाद्यविनादिताम् ॥ ७८ ॥ सेनांनाकसदांदैत्यःप्रासादस्थोव्यलोकयत् ॥
सचिंतयामासतदाकिंचिद्विभ्रांतमानसः ॥ ७९ ॥ अपूर्वःकोभवेद्योद्धायोमयानविनिर्जितः ॥ ततश्चिताकुलोदैत्यःशुश्रावकटुकाक्षरम् ॥ सिद्धवं
दिभिरुद्घुष्टमिदंहृदयदारुणम् ॥ १८० ॥ जयातुलशक्तिदीधितिपंजरभुजदंडप्रचंडतररभससुरवदनकुमुदविकासनविलासनेत्रकुमारवर ॥
॥ ८१ ॥ जयदितिजकुलमहोदधिवडवानलमधुरमयूररथसुरमकुटकोटिकुंचितचरणनखांकुरमहासेन ॥ ८२ ॥ जयचलितललितचूडाक
लापनवविमलकमलदंडकांतदैत्येशवंशदुःसहदावानल ॥ ८३ ॥ जयविशाखविभोजयबालसप्तवासरभुवनालिशोकशमनजयसकललोकदि
तिसुतधुरंधरनाशकस्कंद ॥ ८४ ॥ श्रुत्वैतत्तारकःसर्वमुद्घुष्टंदेववंदिभिः ॥ सस्मारब्रह्मणोवाक्यंवधंबालादुपस्थितं ॥ ८५ ॥ स्मृत्वाधर्मौ
घविध्वंसीसदावीरपदानुगः ॥ मंदिरान्निर्जगामाशुशोकग्रस्तेनचेतसा ॥ ८६ ॥ कालनेमिमुखादैत्याःसंत्रस्ताभ्रांतचेतसः ॥ स्वेष्वनीकेषुचत
दात्वराविस्मितचेतसः ॥ ८७ ॥ हिरण्यकशिपुःप्राहदानवानांधुरंधरः ॥ त्रपाकरंभवेन्मह्यंबालस्यास्यपलायनम् ॥ ८८ ॥ यद्यहंहंतवेयामिसोपिवै
कमलाश्रितः ॥ हत्वाहंबालकंचैनंदुःस्पर्शःस्यामकारणं ॥८९॥ यातधावतगृह्णीतयोजयध्वंवरूथिनीम् ॥ कुमारंतारकोदृष्ट्वाबभाषेभीषणाकृतिः ॥१९०॥
किंबालयोद्धुकामोसिक्रीडकंदुकलीलया ॥ येनातपोनिसृष्टस्तेसत्संगरविभाषक ॥ ९१ ॥ बालत्वादथतेबुद्धिरेवंस्वल्पार्थदर्शिनी ॥ कुमारोपितमग्रस्थं
बभाषेहर्षवत्तमं ॥ ९२ ॥ शृणुतारकशास्त्रार्थइहनैवनिरूप्यते ॥ शस्त्रैरर्थानदृश्यंतेसमरेनिर्भरंभये ॥ ९३ ॥ शिशुत्वंमावमंस्थामेशिशुःकष्टोभुजंगमः ॥
दुष्प्रेक्षोभास्करोबालस्तथाहंदुर्जयःशिशुः ॥ ९४ ॥ अल्पाक्षरोनमंत्रःकिंसस्फुरोदैत्यदृश्यते ॥ कुमारेप्रोक्तवत्येवंदैत्यश्चिक्षेपमुद्गरं ॥ ९५ ॥ कुमारस्तं







निरासोग्रंचक्रेणामोघवर्चसा ॥ ततश्चिक्षेपदैत्येंद्रोभिंदिपालमयोमयं ॥ ९६ ॥ करेणतंचजग्राहकार्तिकेयोमरारिहा ॥ गदांमुमोचदैत्यायसमुत्थायखरस्व नाम् ॥ ९७ ॥ तयाहतस्ततोदैत्यश्चकम्पेचलराडिव ॥ मेनेचदुर्जयंदैत्यस्तदाबालंसुदुःसहं ॥ ९८ ॥ चिंतयामासबुद्ध्यावैप्राप्तःकालोनसंशयः ॥ कंपितं चसमालोक्यकालनेमिपुरोगमाः ॥१९९॥ सर्वेदैत्येश्वराजघ्नुःकुमारंरणदारुणं ॥ सतैःप्रहारैरस्पृष्टस्तथाक्लेशैर्महाद्युतिः ॥२००॥ सबालोबलिभिर्वैरैरयुध्य द्दानवैरणे ॥ रणशौण्डाश्चदैत्येंद्राःपुनर्जघ्नुःशिलीमुखैः ॥ १ ॥ कुमारंसमरेदैत्याबलिनोदेवकंटकाः ॥ कुमारस्यव्यथानाभूदैत्यास्त्रनिहतस्यतु ॥ २ ॥ प्राणां तकरणंजातंदेवानांदानवाहवं ॥ देवान्निपीडितान्दृष्ट्वाकुमारःकोपमाविशत् ॥ ३ ॥ ततोस्त्रैर्दारयामासदानावानामनीकिनीम् ॥ तैरस्त्रैर्निष्प्रतीकारैस्ता डितास्सुरकंटकाः ॥४॥ कालनेमिमुखाःसर्वेरणेह्यासन्पराङ्मुखाः ॥ विद्रुतेषुचदैत्येषुप्रहतेषुसमंततः ॥५॥ किन्नरोद्गारगीतैश्चहास्यसन्यस्तचेतनः ॥ जघ्नेकु मारंगदयानिष्टप्तकनकत्विषा ॥ ६ ॥ शरैर्मयूरंचित्रैश्चचकारविमुखंरणे ॥ दृष्ट्वापराङ्मुखोदेवोमुक्तरक्तंस्ववाहनम् ॥७॥ जग्राहशक्तिंविमलांरणेकनकभूष णाम् ॥ बाहुनाहेमकेयूररुचिरेणषडाननः ॥ ८ ॥ ततोब्रवीन्महासेनस्तारकंदानवाधिपम् ॥ तिष्ठतिष्ठसुदुर्बुद्धेयमलोकंविलोकय ॥ ९ ॥ हतो ह्यसिमयाशक्त्यास्मरस्वंदैत्यचेष्टितम् ॥ इत्युक्त्वातुततः शक्तिंमुमोचदितिजंप्रति ॥ १० ॥ साकुमारभुजोत्सृष्टातत्केयूररवानुगा ॥ बिभेददैत्यहृदयं वज्रशैलेंद्रकर्कशम् ॥ ११ ॥ गतासुःसपपातोर्व्यांप्रलयेभूधरोयथा ॥ विकीर्णमकुटोष्णीषोविस्रस्ताखिलभूषणः ॥ १२ ॥ तस्मिन्विनिहतेदैत्येदा नवानांधुरंधरे ॥ नाभूत्कश्चित्तदादुःखीनरकेष्वपिपापकृत् ॥ १३ ॥ स्तुवंतःषण्मुखंदेवाःप्राक्रीडन्नागतास्मिताः ॥ जग्मुःस्वानेवभुवनान्निरस्यासं स्तथोत्सुकाः ॥ १४ ॥ ददुश्चापिवरंसर्वेदेवाश्चषण्मुखंप्रति ॥ तुष्टाःसंप्राप्तसर्वार्थास्सहासिद्धैस्तपोधनैः ॥१५॥ देवाऊचुः ॥ यःपठेत्स्कंदसंबंधांकथा मेतांमहामतिः ॥ शृणुयाच्छ्रावयेद्वापिसभवेत्कीर्तिमान्नरः ॥ १६ ॥ बह्वायुःसुभगःश्रीमान्कीर्तिमान्शुभदर्शनः ॥ भूतेभ्योनिर्भयश्चापिसर्वदुःख विवर्जितः ॥ १७ ॥ संध्यामुपास्ययःपूर्वांस्कंदस्यचरितंपठेत् ॥ सयुक्तःकिन्नरैःसर्वैर्महाधनपतिर्भवेत् ॥ १८ ॥ इति श्रीपाद्मपुराणेप्रथमेसृष्टि खंडेकुमारसंभवतारकवधोनामचतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ भीष्मउवाच ॥ इदानींश्रोतुमिच्छामिहिरण्यकशिपोर्वधम् ॥ नरसिंहस्यमाहात्म्यं तथापापविनाशनम् ॥ १ ॥ पुलस्त्यउवाच ॥ पुराकृतयुगेराजन्हिरण्यकशिपुः प्रभुः ॥ दैत्यानामादिपुरुषश्चकारसुमहत्तपः ॥ २ ॥ दशवर्षसहस्रा णिदशवर्षशतानिच ॥ जलवासीसमभवत्स्नानमौनधृतव्रतः ॥ ३ ॥ वृतःशमदमाभ्यांचब्रह्मचर्येणचैवहि ॥ ब्रह्माप्रीतोभवत्तस्यतपसानियमेनच ॥ ४ ॥ ततः स्वयंभूर्भगवान्स्वयमागत्यतत्रहि ॥ विमानेनार्कवर्णेनहंसयुक्तेनभास्वता ॥५॥ आदित्यैर्वसुभिःसाध्यैर्मरुद्भिर्दैवतैस्सह ॥ रुद्रैर्विश्वसहायैश्चयक्ष

राक्षसपन्नगैः ॥ ६ ॥ दिग्भिश्चैवविदिग्भिश्चनदीभिःसागरैस्तथा ॥ नक्षत्रैश्चमुहूर्तैश्चखचरैश्चमहाग्रहैः ॥ ७ ॥ देवैर्ब्रह्मर्षिभिःसार्द्धंसिद्धैः सप्तर्षभिस्त
था ॥ राजर्षिभिः पुण्यकृद्भिर्गंधर्वाप्सरसांगणैः ॥८ ॥ चराचरगुरुःश्रीमान्वृतःसर्वैर्दिवौकसैः ॥ ब्रह्माब्रह्मविदांश्रेष्ठोदैत्यंवचनमब्रवीत् ॥ ९ ॥
प्रीतोस्मितवभक्तस्यतपसानेनसुव्रत ॥ वरंवरयभद्रंतेयथेष्टंकाममाप्नुहि ॥ १० ॥ हिरण्यकशिपुरुवाच ॥ नदेवासुरगंधर्वानयक्षोरगराक्षसाः ॥
नमानुषाः पिशाचाश्चहन्युर्मांदेवसत्तम ॥ ११ ॥ ऋषयोमानवाःशापैर्नशपेयुःपितामह ॥ यदिमेभगवान्प्रीतोवरएषवृतोमया ॥ १२ ॥ नशस्त्रे
णनचास्त्रेणगिरिणापादपेनवा ॥ नशुष्केणनचार्द्रेणनस्याच्चान्येनमेवधः ॥ १३ ॥ भवेयमहमेवार्कःसोमोवायुर्हुताशनः ॥ सलिलंचांत
रिक्षंचनक्षत्राणिदिशोदश ॥ १४ ॥ अहंक्रोधश्चकामश्चवरुणोवासवोयमः ॥ धनदश्चधनाध्यक्षोयक्षःकिंपुरुषाधिपः ॥ १५ ॥ ब्रह्मोवाच ॥
एषदिव्योवरस्तातमयादत्तस्तवाद्भुतः ॥ सर्वकामप्रदोवत्सप्राप्स्यसित्वंनसंशयः ॥ १६ ॥ एवमुक्त्वासभगवान्जगामाकाशमवेहि ॥
वैराजंब्रह्मसदनंब्रह्मर्षिगणसेवितम् ॥ १७ ॥ ततोदेवाश्चगंधर्वाऋषिभिःसहचारणाः ॥ वरप्रदानंश्रुत्वैवंपितामहमुपस्थिताः ॥ १८ ॥
॥ देवाऊचुः ॥ वरप्रदानाद्भगवन्वधिष्यातिसनोसुरः ॥ तत्प्रसादश्चभगवन्वधोप्यस्यविचिंत्यताम् ॥ १९ ॥ भगवान्सर्वभूतानामादिकर्त्ता
स्वयंप्रभुः ॥ स्रष्टाचहव्यकव्यानामव्यक्तप्रकृतिःपरः ॥ २० ॥ सर्वलोकहितंवाक्यंश्रुत्वादेवःप्रजापतिः ॥ आश्वासयामासतदासुशीतैर्वचनां
बुभिः ॥ २१ ॥ अवश्यंत्रिदशानेनप्राप्तव्यंतपसःफलं ॥ तपसोऽन्तेस्यभगवान्वधंविष्णुःकरिष्यति ॥ २२ ॥ तच्छ्रुत्वाविबुधावाक्यंसर्वेपंकजजान
नात् ॥ स्वानिस्थानानिदिव्यानिविप्रजग्मुर्मुदान्विताः ॥ २३ ॥ लब्धमात्रेवरेसोथप्रजास्सर्वाअबाधत ॥ हिरण्यकशिपुर्दैत्योवरदानेनगर्वितः ॥ २४ ॥ आ
श्रमेषुमहाभागान्मुनीन्वैशंसितव्रतान् ॥ सत्यधर्मपरान्दान्तान्धर्षयामासदानवः ॥ २५ ॥ देवांस्त्रिभुवनस्थांश्चपराजित्यमहासुरः ॥ त्रैलोक्यंवशमानी
यस्वर्गेवसतिदानवः ॥२६॥ यदावरमदोत्सिक्तश्चोदितःकालधर्मिणा ॥ यज्ञियानकरोदैत्यानयज्ञीयांश्चदेवतान् ॥ २७ ॥ तथादैत्याश्चसाध्याश्चविश्वेचवसव
स्तथा ॥ रुद्रादेवगणायक्षादेवद्विजमहर्षयः ॥२८॥ शरण्यंशरणंविष्णुमुपतस्थुर्महाबलम् ॥ देवदेवंयज्ञमयंवासुदेवंसनातनम् ॥ २९ ॥ देवाऊचुः ॥
नारायणमहाभागदेवास्त्वांशरणंगताः ॥ त्रायस्वजहिदैत्येंद्रंहिरण्यकशिपुंप्रभो ॥ ३० ॥ त्वंहिनःपरमोदातात्वंहिनःपरमोगुरुः ॥ त्वंहिनःपरमोदेवो
ब्रह्मादीनांसुरोत्तमः ॥ ३१ ॥ विष्णुरुवाच ॥ भयंत्यजद्ध्वममराअभयंवोददाम्यहम् ॥ तथैवत्रिदिवंदेवाः प्रतिपद्यतमाचिरम् ॥ ३२ ॥ एनंहिसगणंदै
त्यंवरदानेनगर्वितम् ॥ अवध्यममरेंद्राणांदानवेंद्रंनिहन्म्यहम् ॥ ३३ ॥ एवमुक्त्वातुभगवान्विश्वपोविष्णुरव्ययः ॥ हिरण्यकशिपुस्थानंजगा

महरिरीश्वरः ॥३४॥ तेजसाभास्कराकारःशशीकांत्येवचापरः ॥ नरस्यकृत्वार्धतनुंसिंहस्यार्द्धतनुंतथा ॥ ३५ ॥ नारसिंहेनवपुषापाणिंसंगृह्यपाणिना ॥ ततोददर्शविस्तीर्णांदिव्यांरम्यांमनोरमाम्॥३६॥सर्वकामयुतांशुभ्रांहिरण्यकशिपोःसभाम् ॥ विस्तीर्णांयोजनशतंशतमध्यर्द्धमायताम् ॥ ३७ ॥ वैहायसींकामगमांपंचयोजनमुच्छ्रिताम् ॥ जराशोकक्षमापेतांनिष्प्रकम्प्यांशिवांसुखाम् ॥ ३८ ॥ वेश्मासनवतींरम्यांज्वलंतीमिवतेजसा ॥ अंतःसलिलसंयुक्तांविहितांविश्वकर्मणा ॥ ३९ ॥ दिव्यवर्णमयैर्वृक्षैःफलपुष्पप्रदैर्युताम् ॥ नीलपीतासितश्यामैःश्वेतैर्लोहितकैरपि ॥ ४० ॥ अवदातैस्तथागुल्मैरक्तमंजरिधारिभिः ॥ सिताभ्रघनसंकाशांप्लवंतींचददर्शसः ॥ ४१ ॥ रश्मिमतीस्वभावेनदिव्यगंधमनोरमा ॥ सुसुखानचदुःखासानशीतानचघर्मदा ॥ ४२ ॥ नक्षुत्पिपासेग्लानिंवाप्राप्यतांप्राप्नुवंतिते ॥ नानारूपैरूपकृतासुचित्रैश्चसुभास्वरैः ॥ ४३ ॥ अतिचंद्रातिसूर्यातिशिखिकान्तिस्वयंप्रभा ॥ दीप्यतेनाकपृष्ठस्थाभासयंतीविभासुरा ॥४४॥ सर्वंचकाशिरेतस्यांमुदिताश्चैवमानुषाः ॥ रसवच्चप्रभूतंचभक्ष्यभोज्यान्नमुत्तमं॥४५॥ पुण्यगंधास्रजश्चापिनित्यकालफलाद्रुमाः ॥ उष्णेशीतानितोयानिशीतेचोष्णानिसंतिवै ॥ ४६ ॥ पुष्पिताग्रान्महाशाखान्प्रवालांकुरधारिणः ॥ लतावितानसंछन्नान्कल्पानैक्षिष्टसप्रभुः ॥ ४७ ॥ गंधवंतिचपुष्पाणिरसवंतिफलानिच ॥ तानिशीतानिचोष्णानितत्रतत्रसरांसिच ॥ ४८ ॥ अपश्यद्भूपतीर्थानिसभायांतस्यसप्रभुः ॥ नलिनैःपुंडरीकैश्चशतपत्रैःसुगंधिभिः ॥ ४९ ॥ रक्तैःकुवलयैश्चैवकल्हारैरुत्पलैस्तथा ॥ नानाश्चर्यसमोपेतैःपुष्पैरन्यैश्चसुप्रियैः ॥५०॥ कारंडवैश्चक्रवाकैःसारसैःकुररैरपि ॥ विमलस्फटिकाभानिपांडुरच्छदनैर्द्विजैः ॥५१॥ बहुहंसोपगीतानिसारसानांरुतानिच ॥गंधयुक्तालतास्तत्रपुष्पमंजरिधारिणीः ॥५२॥ दृष्टवान्भगवान्हृष्टःखदिरान्वेतसार्जुनान् ॥ चूतानिम्बानागवृक्षाःकदंबावकुलाधवाः ॥५३ ॥ प्रियंगवःपाटलाख्याःशाल्मल्यस्सहरिद्रवाः ॥ शालास्तालास्तमालाश्चश्चंपकाश्चमनोरमाः ॥ ५४ ॥ तथैवान्येव्यराजंतसभायांपुष्पितद्रुमाः ॥ एलाककुभकंकोललवलीकर्णपूरकाः ॥५५॥ मधुकाःकोविदाराश्चबहुतालसमुच्छ्रयाः ॥ अंजनाशोकपर्णासावहवश्चित्रकाद्रुमाः ॥ ५६ ॥ वरुणाश्चपलाशाश्चापनसास्सहचंदनैः ॥ नीलास्सुमनसश्चैवनीपाश्चाश्वत्थतिंदुकाः॥५७॥ पारिजाताश्चतरवोमल्लिकाभद्रदारवः ॥ अटरूपाःपीलुकाश्चतथाचैवैलवालुकाः॥५८॥मंदारकाःकुरवकापुन्नागाःकुटजास्तथा ॥ रक्ताःकुरवकाश्चैवनीलाश्चागरुभिःसह ॥ ५९ ॥ किंशुकाश्चैवभव्याश्चदाडिमाबीजपूरकाः ॥ कालेयकादुकूलाश्चहिंगवस्तैलवर्त्तिकाः ॥६०॥ खर्जूरानालिकेराश्चहरीतकमधूककाः ॥ सप्तपर्णाश्चबिल्वाश्चसयावाश्चशरावताः ॥ ६१ ॥ असनाश्चतमालाश्चनानागुल्मसमावृताः ॥ लताश्चविविधाकाराःपुष्पपत्रफलोपगाः ॥ ६२ ॥ एतेचान्येचबहवस्तत्रकाननजाद्रुमाः ॥ नानापुष्पफलोपेताव्यराजंतसमंततः ॥ ६३ ॥ चकोराः

शतपत्राश्चमत्तकोकिलशारिकाः ॥ पुष्पितान्पुष्पिताग्रांश्चसंपतंतिमहाद्रुमान् ॥ ६४ ॥ रक्तपीतारुणास्तत्रपादपाग्रगताःखगाः ॥ परस्परम
वैक्षंतप्रहृष्टाजीवजीवकाः ॥ ६५ ॥ तस्यांसभायांदैत्येंद्रोहिरण्यकशिपुस्तदा ॥ आसीनआसनेचित्रेदशनल्वप्रमाणतः ॥ ६६ ॥ दिवाकरनिभेदिव्ये
दिव्यास्तरणसंस्तृते ॥ हिरण्यकशिपुर्दैत्यआस्तेज्वलितकुंडलः ॥ ६७ ॥ उपचेरुर्महादैत्याहिरण्यकशिपुंतदा ॥ दिव्यतालानिगी
तानिजगुर्गंधर्वसत्तमाः ॥ ६८ ॥ विश्वाचीसहजन्याचप्रम्लोचेतिचपूजिता ॥ दिव्याथसौरभेयीचसमीचीपुंजिकस्थला ॥ ६९ ॥ मिश्रकेशीचरंभाच
चित्रभाश्रुतिविभ्रमा ॥ चारुनेत्राघृताचीचमेनकाचोर्वशीतथा ॥ ७० ॥ एतास्सहस्रशश्चान्यानृत्यगीतविशारदाः ॥ उपातिष्ठंतराजानं
हिरण्यकशिपुंप्रभुम् ॥ ७१ ॥ उपासतेदितेःपुत्राःसर्वेलब्धवरास्तथा ॥ बलिर्विरोचनस्तत्रनरकःपृथिवीसुतः ॥ ७२ ॥ प्रह्लादोविप्रचित्तिश्चगवि
ष्ठश्चमहासुरः ॥ सुरहन्तादुःखकर्तासुमनास्सुमतिस्तथा ॥ ७३ ॥ घटोदरोमहापार्श्वःक्रथनःपिठरस्तथा ॥ विश्वरूपस्स्वरूपश्चविश्वकायोमहाव
लः ॥ ७४ ॥ दशग्रीवश्चवालीचमेघवासामहासुरः ॥ घटाभोविटरूपश्चज्वलनश्चेंद्रतापनः ॥ ७५ ॥ दैत्यदानवसंघास्तेसर्वेज्वलितकुंडलाः ॥ स्रग्विणो
वाग्मिणःसर्वेसर्वेचचरितव्रताः ॥ ७६ ॥ सर्वेलब्धवराःशूरास्सर्वेविहितमृत्यवः ॥ एतेचान्येचबहवोहिरण्यकशिपुंप्रभुम् ॥ ७७ ॥ उपासतेमहात्मानंसर्वेदि
व्यपरिच्छदाः ॥ विमानैर्विविधाकारैर्भ्राजमानैरिवाग्निभिः ॥ ७८ ॥ महेन्द्रवपुषःसर्वेविचित्रांगदबाहवः ॥ भूषितांगादितेःपुत्रास्तमुपासतसर्वतः ॥ ७९ ॥
ऐश्वर्यंदैत्यसिंहस्ययथातस्यमहात्मनः ॥ नश्रुतंनैवदृष्टंचकस्यापिभुवनत्रये ॥ ८० ॥ रजतकनकचित्रवेदिकायांपरिकृतरत्नविचित्रवीथिकायाम् ॥
सददर्शमृगाधिपःसभायांसुरुचिरजालगवाक्षशोभितायाम् ॥ ८१ ॥ कनकवलयहारभूषितांगंदितितनयंसमृगाधिपोददर्श ॥ दिवसकरकरप्रभंज्वलं
तंदितिजसहस्रशतैर्निषेव्यमाणम् ॥ ८२ ॥ ततोदृष्ट्वामहाभागंकालचक्रमिवागतम् ॥ नारसिंहवपुश्छन्नंभस्मच्छन्नमिवानलम् ॥ ८३ ॥ हिरण्यक
शिपोःपुत्रःप्रह्लादोनामवीर्यवान् ॥ दिव्येनवपुषासिंहमपश्यद्देवमागतम् ॥ ८४ ॥ तंदृष्ट्वारुक्मशैलाभमपूर्वांतनुमाश्रितम् ॥ विस्मितादानवाःस
र्वेहिरण्यकशिपुश्चसः ॥ ८५ ॥ प्रह्लादउवाच ॥ ॥ महाराजमहाबाहोदैत्यानामादिसंभव ॥ नश्रुतंनैवमेदृष्टंनारसिंहमिदंवपुः ॥ ८६ ॥ अव्यक्तंपरमंदिव्यंकि
मिदंरूपमागतम् ॥ दैत्यांतकरणंघोरंशंसतीवमनोमम ॥ ८७ ॥ अस्यदेवाःशरीरस्थाःसागराःसरितस्तथा ॥ हिमवान्पारियात्रश्चयेचान्येकुल
पर्वताः ॥ ८८ ॥ चंद्रमास्सहनक्षत्रैरादित्यारश्मिभिःसह ॥ धनदोवरुणश्चैवयमःशक्रःशचीपतिः ॥ ८९ ॥ मरुतोदेवगंधर्वाऋषयश्चतपोधनाः ॥ ना
गायक्षाःपिशाचाश्चराक्षसाभीमविक्रमाः ॥ ९० ॥ ब्रह्मादेवाःपशुपतिर्ललाटस्थाभ्रमंतिहि ॥ स्थावराणिचसर्वाणिजंगमानितथैवच ॥ ९१ ॥ भवांश्चसहितोस्माभिः

